# महाभारत - आश्रमवासिक पर्व

# ॥ महाभारत आश्रमवासिकपर्व ॥

## आश्रमवासपर्व

## धृतराष्ट्रशुश्रूषा

## अध्याय ००१

जनमेजय उवाच ॥

प्राप्य राज्यं महाभागाः पाण्डवा मे पितामहाः ।
कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥ ००१ ॥

स हि राजा हतामात्यो हतपुत्रो निराश्रयः ।
कथमासीद्धतैश्वर्यो गान्धारी च यशस्विनी ॥ ००२ ॥

कियन्तं चैव कालं ते पितरो मम पूर्वकाः ।
स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि ॥ ००३ ॥

वैशंपायन उवाच ॥

प्राप्य राज्यं महात्मानः पाण्डवा हतशात्रवः ।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ॥ ००४ ॥

धृतराष्ट्रमुपातिष्ठद्विदुरः सञ्जयस्तथा ।
युयुत्सुश्चापि मेधावी वैश्यापुत्रः स कौरवः ॥ ००५ ॥

पाण्डवाः सर्वकार्याणि संपृच्छन्ति स्म तं नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ॥ ००६ ॥

सदा हि गत्वा ते वीराः पर्युपासन्त तं नृपम् ।
पादाभिवन्दनं कृत्वा धर्मराजमते स्थिताः ॥ ००७ ॥

ते मूर्ध्नि समुपाघ्राताः सर्वकार्याणि चक्रिरे ॥ ००७ ॥

कुन्तिभोजसुता चैव गान्धारीमन्ववर्तत ।
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः ॥ ००८ ॥

समां वृत्तिमवर्तन्त तयोः श्वश्र्वोर्यथाविधि ॥ ००८ ॥

शयनानि महार्हाणि वासांस्याभरणानि च ।
राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः ॥ ००९ ॥

युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत् ॥ ००९ ॥

तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्तत ।
विदुरः सञ्जयश्चैव युयुत्सुश्चैव कौरवः ॥ ०१० ॥

उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम् ॥ ०१० ॥

स्यालो द्रोणस्य यश्चैको दयितो ब्राह्मणो महान् ।
स च तस्मिन्महेष्वासः कृपः समभवत्तदा ॥ ०११ ॥

व्यासश्च भगवान्नित्यं वासं चक्रे नृपेण ह ।

कथाः कुर्वन्पुराणर्षिर्देवर्षिर्नृपरक्षसाम्  ॥ ०१२  ॥

धर्मयुक्तानि कार्याणि व्यवहारान्वितानि च ।
धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत्  ॥ ०१३  ॥

सामन्तेभ्यः प्रियाण्यस्य कार्याणि सुगुरूण्यपि ।
प्राप्यन्तेऽर्थैः सुलघुभिः प्रभावाद्विदुरस्य वै  ॥ ०१४  ॥

अकरोद्बन्धमोक्षांश्च वध्यानां मोक्षणं तथा ।
न च धर्मात्मजो राजा कदाचित्किञ्चिदब्रवीत्  ॥ ०१५  ॥

विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः ।
सर्वान्कामान्महातेजाः प्रददावम्बिकासुते  ॥ ०१६  ॥

आरालिकाः सूपकारा रागखाण्डविकास्तथा ।
उपातिष्ठन्त राजानं धृतराष्ट्रं यथा पुरा  ॥ ०१७  ॥

वासांसि च महार्हाणि माल्यानि विविधानि च ।
उपाजह्रुर्यथान्यायं धृतराष्ट्रस्य पाण्डवाः  ॥ ०१८  ॥

मैरेयं मधु मांसानि पानकानि लघूनि च ।
चित्रान्भक्ष्यविकारांश्च चक्रुरस्य यथा पुरा  ॥ ०१९  ॥

ये चापि पृथिवीपालाः समाजग्मुः समन्ततः ।
उपातिष्ठन्त ते सर्वे कौरवेन्द्रं यथा पुरा  ॥ ०२०  ॥

कुन्ती च द्रौपदी चैव सात्वती चैव भामिनी ।
उलूपी नागकन्या च देवी चित्राङ्गदा तथा  ॥ ०२१  ॥

धृष्टकेतोश्च भगिनी जरासंधस्य चात्मजा ।
किङ्कराः स्मोपतिष्ठन्ति सर्वाः सुबलजां तथा  ॥ ०२२  ॥

यथा पुत्रवियुक्तोऽयं न किञ्चिद्दुःखमाप्नुयात् ।
इति राजान्वशाद्भ्रातॄन्नित्यमेव युधिष्ठिरः ॥ ०२३ ॥

एवं ते धर्मराजस्य श्रुत्वा वचनमर्थवत् ।
सविशेषमवर्तन्त भीममेकं विना तदा ॥ ०२४ ॥

न हि तत्तस्य वीरस्य हृदयादपसर्पति ।
धृतराष्ट्रस्य दुर्बुद्धेर्यद्वृत्तं द्यूतकारितम् ॥ ०२५ ॥

---

# अध्याय ००२

वैशंपायन उवाच ॥

एवं संपूजितो राजा पाण्डवैरम्बिकासुतः ।
विजहार यथापूर्वमृषिभिः पर्युपासितः ॥ ००१ ॥

ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः ।
तच्च कुन्तीसुतो राजा सर्वमेवान्वमोदत ॥ ००२ ॥

आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः ।
उवाच स तदा भ्रातॄनमात्यांश्च महीपतिः ॥ ००३ ॥

मया चैव भवद्भिश्च मान्य एष नराधिपः ।
निदेशे धृतराष्ट्रस्य यः स्थास्यति स मे सुहृत् ॥ ००४ ॥

विपरीतश्च मे शत्रुर्निरस्यश्च भवेन्नरः ॥ ००४ ॥

परिदृष्टेषु चाहःसु पुत्राणां श्राद्धकर्मणि ।
ददातु राजा सर्वेषां यावदस्य चिकीर्षितम् ॥ ००५ ॥

ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः ।
ब्राह्मणेभ्यो महार्हेभ्यो ददौ वित्तान्यनेकशः ॥ ००६ ॥

धर्मराजश्च भीमश्च सव्यसाची यमावपि ।
तत्सर्वमन्ववर्तन्त धृतराष्ट्रव्यपेक्षया ॥ ००७ ॥

कथं नु राजा वृद्धः सन्पुत्रशोकसमाहतः ।
शोकमस्मत्कृतं प्राप्य न म्रियेतेति चिन्त्यते ॥ ००८ ॥

यावद्धि कुरुमुख्यस्य जीवत्पुत्रस्य वै सुखम् ।
बभूव तदवाप्नोतु भोगांश्चेति व्यवस्थिताः ॥ ००९ ॥

ततस्ते सहिताः सर्वे भ्रातरः पञ्च पाण्डवाः ।
तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने ॥ ०१० ॥

धृतराष्ट्रश्च तान्वीरान्विनीतान्विनये स्थितान् ।
शिष्यवृत्तौ स्थितान्नित्यं गुरुवत्पर्यपश्यत ॥ ०११ ॥

गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्मभिः ।
आनृण्यमगमत्कामान्विप्रेभ्यः प्रतिपाद्य वै ॥ ०१२ ॥

एवं धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितो धीमान्पूजयामास तं नृपम् ॥ ०१३ ॥

# अध्याय ००३

वैशंपायन उवाच ॥

स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः ।
नापश्यत तदा किञ्चिदप्रियं पाण्डुनन्दने ॥ ००१ ॥

वर्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु ।
प्रीतिमानभवद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ००२ ॥

सौबलेयी च गान्धारी पुत्रशोकमपास्य तम् ।
सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ॥ ००३ ॥

प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वह ।
वैचित्रवीर्ये नृपतौ समाचरति नित्यदा ॥ ००४ ॥

यद्यद्ब्रूते च किञ्चित्स धृतराष्ट्रो नराधिपः ।
गुरु वा लघु वा कार्यं गान्धारी च यशस्विनी ॥ ००५ ॥

तत्स राजा महाराज पाण्डवानां धुरंधरः ।
पूजयित्वा वचस्तत्तदकार्षीत्परवीरहा ॥ ००६ ॥

तेन तस्याभवत्प्रीतो वृत्तेन स नराधिपः ।
अन्वतप्यच्च संस्मृत्य पुत्रं मन्दमचेतसम् ॥ ००७ ॥

सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः ।
आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ॥ ००८ ॥

ब्राह्मणान्वाचयित्वा च हुत्वा चैव हुताशनम् ।
आयुष्यं पाण्डुपुत्राणामाशास्ते स नराधिपः ॥ ००९ ॥

न तां प्रीतिं परामाप पुत्रेभ्यः स महीपतिः ।
यां प्रीतिं पाण्डुपुत्रेभ्यः समवाप तदा नृपः ॥ ०१० ॥

ब्राह्मणानां च वृद्धानां क्षत्रियाणां च भारत ।
तथा विड्शूद्रसंघानामभवत्सुप्रियस्तदा ॥ ०११ ॥

यच्च किञ्चित्पुरा पापं धृतराष्ट्रसुतैः कृतम् ।
अकृत्वा हृदि तद्राजा तं नृपं सोऽन्ववर्तत ॥ ०१२ ॥

यश्च कश्चिन्नरः किञ्चिदप्रियं चाम्बिकासुते ।
कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः ॥ ०१३ ॥

न राज्ञो धृतराष्ट्रस्य न च दुर्योधनस्य वै ।
उवाच दुष्कृतं किञ्चिद्युधिष्ठिरभयान्नरः ॥ ०१४ ॥

धृत्या तुष्टो नरेन्द्रस्य गान्धारी विदुरस्तथा ।
शौचेन चाजातशत्रोर्न तु भीमस्य शत्रुहन् ॥ ०१५ ॥

अन्ववर्तत भीमोऽपि निष्टनन्धर्मजं नृपम् ।
धृतराष्ट्रं च संप्रेक्ष्य सदा भवति दुर्मनाः ॥ ०१६ ॥

राजानमनुवर्तन्तं धर्मपुत्रं महामतिम् ।
अन्ववर्तत कौरव्यो हृदयेन पराङ्मुखः ॥ ०१७ ॥

# भीमापनयः

## अध्याय ००४

वैशंपायन उवाच ॥

युधिष्ठिरस्य नृपतेर्दुर्योधनपितुस्तथा ।
नान्तरं ददृशू राजन्पुरुषाः प्रणयं प्रति ॥ ००१ ॥

यदा तु कौरवो राजा पुत्रं सस्मार बालिशम् ।
तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ॥ ००२ ॥

तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम् ।
नामर्षयत राजेन्द्र सदैवातुष्टवद्धृदा ॥ ००३ ॥

अप्रकाशान्यप्रियाणि चकारास्य वृकोदरः ।
आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ॥ ००४ ॥

अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाकरोत् ।
संश्रवे धृतराष्ट्रस्य गान्धार्याश्चाप्यमर्षणः ॥ ००५ ॥

स्मृत्वा दुर्योधनं शत्रुं कर्णदुःशासनावपि ।
प्रोवाचाथ सुसंरब्धो भीमः स परुषं वचः ॥ ००६ ॥

अन्धस्य नृपतेः पुत्रा मया परिघबाहुना ।
नीता लोकममुं सर्वे नानाशस्त्रात्तजीविताः ॥ ००७ ॥

इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ ।
ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः ॥ ००८ ॥

ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ ।

याभ्यां दुर्योधनो नीतः क्षयं ससुतबान्धवः ॥ ००९ ॥

एताश्चान्याश्च विविधाः शल्यभूता जनाधिपः ।
वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् ॥ ०१० ॥

सा च बुद्धिमती देवी कालपर्यायवेदिनी ।
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे ॥ ०११ ॥

ततः पञ्चदशे वर्षे समतीते नराधिपः ।
राजा निर्वेदमापेदे भीमवाग्बाणपीडितः ॥ ०१२ ॥

नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
श्वेताश्वो वाथ कुन्ती वा द्रौपदी वा यशस्विनी ॥ ०१३ ॥

माद्रीपुत्रौ च भीमस्य चित्तज्ञावन्वमोदताम् ।
राज्ञस्तु चित्तं रक्षन्तौ नोचतुः किञ्चिदप्रियम् ॥ ०१४ ॥

ततः समानयामास धृतराष्ट्रः सुहृज्जनम् ।
बाष्पसंदिग्धमत्यर्थमिदमाह वचो भृशम् ॥ ०१५ ॥

---

# धृतराष्ट्रस्य वनगमनसंकल्पः

## अध्याय ००५

धृतराष्ट्र उवाच ॥

विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः ।

ममापराधात्तत्सर्वमिति ज्ञेयं तु कौरवाः ॥ ००१ ॥

योऽहं दुष्टमतिं मूढं ज्ञातीनां भयवर्धनम् ।
दुर्योधनं कौरवाणामाधिपत्येऽभ्यषेचयम् ॥ ००२ ॥

यच्चाहं वासुदेवस्य वाक्यं नाश्रौषमर्थवत् ।
वध्यतां साध्वयं पापः सामात्य इति दुर्मतिः ॥ ००३ ॥

पुत्रस्नेहाभिभूतश्च हितमुक्तो मनीषिभिः ।
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ॥ ००४ ॥

पदे पदे भगवता व्यासेन च महात्मना ।
सञ्जयेनाथ गान्धार्या तदिदं तप्यतेऽद्य माम् ॥ ००५ ॥

यच्चाहं पाण्डुपुत्रेण गुणवत्सु महात्मसु ।
न दत्तवाञ्श्रियं दीप्तां पितृपैतामहीमिमाम् ॥ ००६ ॥

विनाशं पश्यमानो हि सर्वराज्ञां गदाग्रजः ।
एतच्छ्रेयः स परमममन्यत जनार्दनः ॥ ००७ ॥

सोऽहमेतान्यलीकानि निवृत्तान्यात्मनः सदा ।
हृदये शल्यभूतानि धारयामि सहस्रशः ॥ ००८ ॥

विशेषतस्तु दह्यामि वर्षं पञ्चदशं हि वै ।
अस्य पापस्य शुद्ध्यर्थं नियतोऽस्मि सुदुर्मतिः ॥ ००९ ॥

चतुर्थे नियते काले कदाचिदपि चाष्टमे ।
तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम ॥ ०१० ॥

करोत्याहारमिति मां सर्वः परिजनः सदा ।
युधिष्ठिरभयाद्वेत्ति भृशं तप्यति पाण्डवः ॥ ०११ ॥

भूमौ शये जप्यपरो दर्भेष्वजिनसंवृतः ।
नियमव्यपदेशेन गान्धारी च यशस्विनी ॥ ०१२ ॥

हतं पुत्रशतं शूरं सङ्ग्रामेष्वपलायिनम् ।
नानुतप्यामि तच्चाहं क्षत्रधर्मं हि तं विदुः ॥ ०१३ ॥

इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः ॥ ०१३ ॥

भद्रं ते यादवीमातर्वाक्यं चेदं निबोध मे ।
सुखमस्म्युषितः पुत्र त्वया सुपरिपालितः ॥ ०१४ ॥

महादानानि दत्तानि श्राद्धानि च पुनः पुनः ।
प्रकृष्टं मे वयः पुत्र पुण्यं चीर्णं यथाबलम् ॥ ०१५ ॥

गान्धारी हतपुत्रेयं धैर्येणोदीक्षते च माम् ॥ ०१५ ॥

द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः ।
समतीता नृशंसास्ते धर्मेण निहता युधि ॥ ०१६ ॥

न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन ।
सर्वे शस्त्रजिता.ण्ल्लोकान्गतास्तेऽभिमुखं हताः ॥ ०१७ ॥

आत्मनस्तु हितं मुख्यं प्रतिकर्तव्यमद्य मे ।
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि ॥ ०१८ ॥

त्वं हि धर्मभृतां श्रेष्ठः सततं धर्मवत्सलः ।
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् ॥ ०१९ ॥

अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् ।
चीरवल्कलभृद्राजन्गान्धार्या सहितोऽनया ॥ ०२० ॥

तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः ॥ ०२० ॥

उचितं नः कुले तात सर्वेषां भरतर्षभ ।
पुत्रेष्वैश्वर्यमाधाय वयसोऽन्ते वनं नृप ॥ ०२१ ॥

तत्राहं वायुभक्षो वा निराहारोऽपि वा वसन् ।
पत्न्या सहानया वीर चरिष्यामि तपः परम् ॥ ०२२ ॥

त्वं चापि फलभाक्तात तपसः पार्थिवो ह्यसि ।
फलभाजो हि राजानः कल्याणस्येतरस्य वा ॥ ०२३ ॥

---

# अध्याय ००६

युधिष्ठिर उवाच ॥

न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप ।
धिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम् ॥ ००१ ॥

योऽहं भवन्तं दुःखार्तमुपवासकृशं नृप ।
यताहारं क्षितिशयं नाविन्दं भ्रातृभिः सह ॥ ००२ ॥

अहोऽस्मि वञ्चितो मूढो भवता गूढबुद्धिना ।
विश्वासयित्वा पूर्वं मां यदिदं दुःखमश्नुथाः ॥ ००३ ॥

किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा ।
यस्य मे त्वं महीपाल दुःखान्येतान्यवाप्तवान् ॥ ००४ ॥

पीडितं चापि जानामि राज्यमात्मानमेव च ।
अनेन वचसा तुभ्यं दुःखितस्य जनेश्वर ॥ ००५ ॥

भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
भवता विप्रहीणा हि क्व नु तिष्ठामहे वयम् ॥ ००६ ॥

औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम ।
अस्तु राजा महाराज यं चान्यं मन्यते भवान् ॥ ००७ ॥

अहं वनं गमिष्यामि भवान्राज्यं प्रशास्त्विदम् ।
न मामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ ००८ ॥

नाहं राजा भवान्राजा भवता परवानहम् ।
कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे ॥ ००९ ॥

न मन्युर्हृदि नः कश्चिद्दुर्योधनकृतेऽनघ ।
भवितव्यं तथा तद्धि वयं ते चैव मोहिताः ॥ ०१० ॥

वयं हि पुत्रा भवतो यथा दुर्योधनादयः ।
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ॥ ०११ ॥

स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वानुयास्यामि सत्येनात्मानमालभे ॥ ०१२ ॥

इयं हि वसुसंपूर्णा मही सागरमेखला ।
भवता विप्रहीणस्य न मे प्रीतिकरी भवेत् ॥ ०१३ ॥

भवदीयमिदं सर्वं शिरसा त्वां प्रसादये ।
त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः ॥ ०१४ ॥

भवितव्यमनुप्राप्तं मन्ये त्वां तज्जनाधिप ।

दिष्ट्या शुश्रूषमाणस्त्वां मोक्ष्यामि मनसो ज्वरम्  ॥ ०१५  ॥

धृतराष्ट्र उवाच  ॥

तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।
उचितं हि कुलेऽस्माकमरण्यगमनं प्रभो  ॥ ०१६  ॥

चिरमस्म्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामभ्यनुज्ञातुं त्वमर्हसि जनाधिप  ॥ ०१७  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वा धर्मराजानं वेपमानः कृताञ्जलिम् ।
उवाच वचनं राजा धृतराष्ट्रोऽम्बिकासुतः  ॥ ०१८  ॥

सञ्जयं च महामात्रं कृपं चापि महारथम् ।
अनुनेतुमिहेच्छामि भवद्भिः पृथिवीपतिम्  ॥ ०१९  ॥

ग्लायते मे मनो हीदं मुखं च परिशुष्यति ।
वयसा च प्रकृष्टेन वाग्व्यायामेन चैव हि  ॥ ०२०  ॥

इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः ।
गान्धारीं शिश्रिये धीमान्सहसैव गतासुवत्  ॥ ०२१  ॥

तं तु दृष्ट्वा तथासीनं निश्चेष्टं कुरुपार्थिवम् ।
आर्तिं राजा ययौ तूर्णं कौन्तेयः परवीरहा  ॥ ०२२  ॥

युधिष्ठिर उवाच  ॥

यस्य नागसहस्रेण दशसंख्येन वै बलम् ।
सोऽयं नारीमुपाश्रित्य शेते राजा गतासुवत्  ॥ ०२३  ॥

आयसी प्रतिमा येन भीमसेनस्य वै पुरा ।
चूर्णीकृता बलवता स बलार्थी श्रितः स्त्रियम्  ॥ ०२४  ॥

धिगस्तु मामधर्मज्ञं धिग्बुद्धिं धिक्च मे श्रुतम् ।
यत्कृते पृथिवीपालः शेतेऽयमतथोचितः  ॥ ०२५  ॥

अहमप्युपवत्स्यामि यथैवायं गुरुर्मम ।
यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी  ॥ ०२६  ॥

वैशंपायन उवाच  ॥

ततोऽस्य पाणिना राजा जलशीतेन पाण्डवः ।
उरो मुखं च शनकैः पर्यमार्जत धर्मवित्  ॥ ०२७  ॥

तेन रत्नौषधिमता पुण्येन च सुगन्धिना ।
पाणिस्पर्शेन राज्ञस्तु राजा सञ्ज्ञामवाप ह  ॥ ०२८  ॥

---

# व्यासागमनम्

## अध्याय ००७

धृतराष्ट्र उवाच  ॥

स्पृश मां पाणिना भूयः परिष्वज च पाण्डव ।
जीवामीव हि संस्पर्शात्तव राजीवलोचन  ॥ ००१  ॥

मूर्धानं च तवाघ्रातुमिच्छामि मनुजाधिप ।
पाणिभ्यां च परिस्प्रष्टुं प्राणा हि न जहुर्मम ॥ ००२ ॥

अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे ।
येनाहं कुरुशार्दूल न शक्नोमि विचेष्टितुम् ॥ ००३ ॥

व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता ।
ततो ग्लानमनास्तात नष्टसञ्ज्ञ इवाभवम् ॥ ००४ ॥

तवामृतसमस्पर्शं हस्तस्पर्शमिमं विभो ।
लब्ध्वा सञ्जीवितोऽस्मीति मन्ये कुरुकुलोद्वह ॥ ००५ ॥

वैशंपायन उवाच ॥

एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत ।
पस्पर्श सर्वगात्रेषु सौहार्दात्तं शनैस्तदा ॥ ००६ ॥

उपलभ्य ततः प्राणान्धृतराष्ट्रो महीपतिः ।
बाहुभ्यां संपरिष्वज्य मूर्ध्न्याजिघ्रत पाण्डवम् ॥ ००७ ॥

विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम् ।
अतिदुःखाच्च राजानं नोचुः किञ्चन पाण्डवाः ॥ ००८ ॥

गान्धारी त्वेव धर्मज्ञा मनसोद्वहती भृशम् ।
दुःखान्यवारयद्राजन्मैवमित्येव चाब्रवीत् ॥ ००९ ॥

इतरास्तु स्त्रियः सर्वाः कुन्त्या सह सुदुःखिताः ।
नेत्रैरागतविक्लेदैः परिवार्य स्थिताभवन् ॥ ०१० ॥

अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् ।
अनुजानीहि मां राजंस्तापस्ये भरतर्षभ ॥ ०११ ॥

ग्लायते मे मनस्तात भूयो भूयः प्रजल्पतः ।
न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि ॥ ०१२ ॥

तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवम् ।
सर्वेषामवरोधानामार्तनादो महानभूत् ॥ ०१३ ॥

दृष्ट्वा कृशं विवर्णं च राजानमतथोचितम् ।
उपवासपरिश्रान्तं त्वगस्थिपरिवारितम् ॥ ०१४ ॥

धर्मपुत्रः स पितरं परिष्वज्य महाभुजः ।
शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् ॥ ०१५ ॥

न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा ।
यथा तव प्रियं राजंश्चिकीर्षामि परंतप ॥ ०१६ ॥

यदि त्वहमनुग्राह्यो भवतो दयितोऽपि वा ।
क्रियतां तावदाहारस्ततो वेत्स्यामहे वयम् ॥ ०१७ ॥

ततोऽब्रवीन्महातेजा धर्मपुत्रं स पार्थिवः ।
अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये ॥ ०१८ ॥

इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् ।
ऋषिः सत्यवतीपुत्रो व्यासोऽभ्येत्य वचोऽब्रवीत् ॥ ०१९ ॥

# व्यासवाक्यम्

## अध्याय ००८

व्यास उवाच ॥

युधिष्ठिर महाबाहो यदाह कुरुनन्दनः ।
धृतराष्ट्रो महात्मा त्वां तत्कुरुष्वाविचारयन् ॥ ००१ ॥

अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः ।
नेदं कृच्छ्रं चिरतरं सहेदिति मतिर्मम ॥ ००२ ॥

गान्धारी च महाभागा प्राज्ञा करुणवेदिनी ।
पुत्रशोकं महाराज धैर्येणोद्वहते भृशम् ॥ ००३ ॥

अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः ।
अनुज्ञां लभतां राजा मा वृथेह मरिष्यति ॥ ००४ ॥

राजर्षीणां पुराणानामनुयातु गतिं नृपः ।
राजर्षीणां हि सर्वेषामन्ते वनमुपाश्रयः ॥ ००५ ॥

वैशंपायन उवाच ॥

इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्मणा ।
प्रत्युवाच महातेजा धर्मराजो युधिष्ठिरः ॥ ००६ ॥

भगवानेव नो मान्यो भगवानेव नो गुरुः ।
भगवानस्य राज्यस्य कुलस्य च परायणम् ॥ ००७ ॥

अहं तु पुत्रो भगवान्पिता राजा गुरुश्च मे ।
निदेशवर्ती च पितुः पुत्रो भवति धर्मतः ॥ ००८ ॥

इत्युक्तः स तु तं प्राह व्यासो धर्मभृतां वरः ।
युधिष्ठिरं महातेजाः पुनरेव विशां पते ॥ ००९ ॥

एवमेतन्महाबाहो यथा वदसि भारत ।
राजायं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ ०१० ॥

सोऽयं मयाभ्यनुज्ञातस्त्वया च पृथिवीपते ।
करोतु स्वमभिप्रायं मास्य विघ्नकरो भव ॥ ०११ ॥

एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥ ०१२ ॥

पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता ।
शिष्यभूतेन राजायं गुरुवत्पर्युपासितः ॥ ०१३ ॥

क्रतुभिर्दक्षिणावद्भिरन्नपर्वतशोभितैः ।
महद्भिरिष्टं भोगाश्च भुक्ताः पुत्राश्च पालिताः ॥ ०१४ ॥

पुत्रसंस्थं च विपुलं राज्यं विप्रोषिते त्वयि ।
त्रयोदशसमा भुक्तं दत्तं च विविधं वसु ॥ ०१५ ॥

त्वया चायं नरव्याघ्र गुरुशुश्रूषया नृपः ।
आराधितः सभृत्येन गान्धारी च यशस्विनी ॥ ०१६ ॥

अनुजानीहि पितरं समयोऽस्य तपोविधौ ।
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ ०१७ ॥

एतावदुक्त्वा वचनमनुज्ञाप्य च पार्थिवम् ।
तथास्त्विति च तेनोक्तः कौन्तेयेन ययौ वनम् ॥ ०१८ ॥

गते भगवति व्यासे राजा पाण्डुसुतस्ततः ।
प्रोवाच पितरं वृद्धं मन्दं मन्दमिवानतः ॥ ०१९ ॥

यदाह भगवान्व्यासो यच्चापि भवतो मतम् ।
यदाह च महेष्वासः कृपो विदुर एव च ॥ ०२० ॥

युयुत्सुः सञ्जयश्चैव तत्कर्तास्म्यहमञ्जसा ।
सर्वे ह्येतेऽनुमान्या मे कुलस्यास्य हितैषिणः ॥ ०२१ ॥

इदं तु याचे नृपते त्वामहं शिरसा नतः ।
क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति ॥ ०२२ ॥

---

# युधिष्ठिरानुशासनम्

## अध्याय ००९

वैशंपायन उवाच ॥

ततो राज्ञाभ्यनुज्ञातो धृतराष्ट्रः प्रतापवान् ।
ययौ स्वभवनं राजा गान्धार्यानुगतस्तदा ॥ ००१ ॥

मन्दप्राणगतिर्धीमान्कृच्छ्रादिव समुद्धरन् ।
पदातिः स महीपालो जीर्णो गजपतिर्यथा ॥ ००२ ॥

तमन्वगच्छद्विदुरो विद्वान्सूतश्च सञ्जयः ।
स चापि परमेष्वासः कृपः शारद्वतस्तथा ॥ ००३ ॥

स प्रविश्य गृहं राजा कृतपूर्वाह्णिकक्रियः ।
तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ॥ ००४ ॥

गान्धारी चैव धर्मज्ञा कुन्त्या सह मनस्विनी ।
वधूभिरुपचारेण पूजिताभुङ्क्त भारत ॥ ००५ ॥

कृताहारं कृताहाराः सर्वे ते विदुरादयः ।
पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ॥ ००६ ॥

ततोऽब्रवीन्महाराज कुन्तीपुत्रमुपह्वरे ।
निषण्णं पाणिना पृष्ठे संस्पृशन्नम्बिकासुतः ॥ ००७ ॥

अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन ।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥ ००८ ॥

तत्तु शक्यं यथा तात रक्षितुं पाण्डुनन्दन ।
राज्यं धर्मं च कौन्तेय विद्वानसि निबोध तत् ॥ ००९ ॥

विद्यावृद्धान्सदैव त्वमुपासीथा युधिष्ठिर ।
शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ ०१० ॥

प्रातरुत्थाय तान्राजन्पूजयित्वा यथाविधि ।
कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ ०११ ॥

ते तु संमानिता राजंस्त्वया राज्यहितार्थिना ।
प्रवक्ष्यन्ति हितं तात सर्वं कौरवनन्दन ॥ ०१२ ॥

इन्द्रियाणि च सर्वाणि वाजिवत्परिपालय ।
हिताय वै भविष्यन्ति रक्षितं द्रविणं यथा ॥ ०१३ ॥

अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।

दान्तान्कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः ॥ ०१४ ॥

चारयेथाश्च सततं चारैरविदितैः परान् ।
परीक्षितैर्बहुविधं स्वराष्ट्रेषु परेषु च ॥ ०१५ ॥

पुरं च ते सुगुप्तं स्याद्दृढप्राकारतोरणम् ।
अट्टाट्टालकसंबाधं षट्पथं सर्वतोदिशम् ॥ ०१६ ॥

तस्य द्वाराणि कार्याणि पर्याप्तानि बृहन्ति च ।
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च ॥ ०१७ ॥

पुरुषैरलमर्थज्ञैर्विदितैः कुलशीलतः ।
आत्मा च रक्ष्यः सततं भोजनादिषु भारत ॥ ०१८ ॥

विहाराहारकालेषु माल्यशय्यासनेषु च ।
स्त्रियश्च ते सुगुप्ताः स्युर्वृद्धैराप्तैरधिष्ठिताः ॥ ०१९ ॥

शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर ॥ ०१९ ॥

मन्त्रिणश्चैव कुर्वीथा द्विजान्विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥ ०२० ॥

तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिः सह ।
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥ ०२१ ॥

सुसंवृतं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः ।
अरण्ये निःशलाके वा न च रात्रौ कथञ्चन ॥ ०२२ ॥

वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः ।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गुकाः ॥ ०२३ ॥

मन्त्रभेदे हि ये दोषा भवन्ति पृथिवीक्षिताम् ।
न ते शक्याः समाधातुं कथञ्चिदिति मे मतिः ॥ ०२४ ॥

दोषांश्च मन्त्रभेदेषु ब्रूयास्त्वं मन्त्रिमण्डले ।
अभेदे च गुणान्राजन्पुनः पुनररिंदम ॥ ०२५ ॥

पौरजानपदानां च शौचाशौचं युधिष्ठिर ।
यथा स्याद्विदितं राजंस्तथा कार्यमरिंदम ॥ ०२६ ॥

---

# अध्याय ०१०

धृतराष्ट्र उवाच ॥

व्यवहाराश्च ते तात नित्यमाप्तैरधिष्ठिताः ।
योज्यास्तुष्टैर्हितै राजन्नित्यं चारैरनुष्ठिताः ॥ ००१ ॥

परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत ।
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥ ००२ ॥

आदानरुचयश्चैव परदाराभिमर्शकाः ।
उग्रदण्डप्रधानाश्च मिथ्या व्याहारिणस्तथा ॥ ००३ ॥

आक्रोष्टारश्च लुब्धाश्च हन्तारः साहसप्रियाः ।
सभाविहारभेत्तारो वर्णानां च प्रदूषकाः ॥ ००४ ॥

हिरण्यदण्ड्या वध्याश्च कर्तव्या देशकालतः ॥ ००४ ॥

प्रातरेव हि पश्येथा ये कुर्युर्व्ययकर्म ते ।

अलङ्कारमथो भोज्यमत ऊर्ध्वं समाचरेः ॥ ००५ ॥

पश्येथाश्च ततो योधान्सदा त्वं परिहर्षयन् ।
दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ॥ ००६ ॥

सदा चापररात्रं ते भवेत्कार्यार्थनिर्णये ।
मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ॥ ००७ ॥

सर्वे त्वात्ययिकाः कालाः कार्याणां भरतर्षभ ।
तथैवालङ्कृतः काले तिष्ठेथा भूरिदक्षिणः ॥ ००८ ॥

चक्रवत्कर्मणां तात पर्यायो ह्येष नित्यशः ॥ ००८ ॥

कोशस्य सञ्चये यत्नं कुर्वीथा न्यायतः सदा ।
द्विविधस्य महाराज विपरीतं विवर्जयेः ॥ ००९ ॥

चारैर्विदित्वा शत्रूंश्च ये ते राज्यान्तरायिणः ।
तानाप्तैः पुरुषैर्दूराद्घातयेथाः परस्परम् ॥ ०१० ॥

कर्मदृष्ट्याथ भृत्यांस्त्वं वरयेथाः कुरूद्वह ।
कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ॥ ०११ ॥

सेनाप्रणेता च भवेत्तव तात दृढव्रतः ।
शूरः क्लेशसहश्चैव प्रियश्च तव मानवः ॥ ०१२ ॥

सर्वे जानपदाश्चैव तव कर्माणि पाण्डव ।
पौरोगवाश्च सभ्याश्च कुर्युर्ये व्यवहारिणः ॥ ०१३ ॥

स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च ।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥ ०१४ ॥

देशान्तरस्थाश्च नरा विक्रान्ताः सर्वकर्मसु ।
मात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥ ०१५ ॥

गुणार्थिनां गुणः कार्यो विदुषां ते जनाधिप ।
अविचाल्याश्च ते ते स्युर्यथा मेरुर्महागिरिः ॥ ०१६ ॥

---

# अध्याय ०११

धृतराष्ट्र उवाच ॥

मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।
उदासीनगुणानां च मध्यमानां तथैव च ॥ ००१ ॥

चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।
मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन ॥ ००२ ॥

तथामात्या जनपदा दुर्गाणि विषमाणि च ।
बलानि च कुरुश्रेष्ठ भवन्त्येषां यथेच्छकम् ॥ ००३ ॥

ते च द्वादश कौन्तेय राज्ञां वै विविधात्मकाः ।
मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ॥ ००४ ॥

एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ।
अत्र षाड्गुण्यमायत्तं युधिष्ठिर निबोध तत् ॥ ००५ ॥

वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुनन्दन ।
द्विसप्तत्या महाबाहो ततः षाड्गुण्यचारिणः ॥ ००६ ॥

यदा स्वपक्षो बलवान्परपक्षस्तथाबलः ।
विगृह्य शत्रून्कौन्तेय यायात्क्षितिपतिस्तदा ॥ ००७ ॥

यदा स्वपक्षोऽबलवांस्तदा संधिं समाश्रयेत् ॥ ००७ ॥

द्रव्याणां सञ्चयश्चैव कर्तव्यः स्यान्महांस्तथा ।
यदा समर्थो यानाय नचिरेणैव भारत ॥ ००८ ॥

तदा सर्वं विधेयं स्यात्स्थानं च न विभाजयेत् ।
भूमिरल्पफला देया विपरीतस्य भारत ॥ ००९ ॥

हिरण्यं कुप्यभूयिष्ठं मित्रं क्षीणमकोशवत् ।
विपरीतान्न गृह्णीयात्स्वयं संधिविशारदः ॥ ०१० ॥

संध्यर्थं राजपुत्रं च लिप्सेथा भरतर्षभ ।
विपरीतस्तु तेऽदेयः पुत्र कस्याञ्चिदापदि ॥ ०११ ॥

तस्य प्रमोक्षे यत्नं च कुर्याः सोपायमन्त्रवित् ॥ ०११ ॥

प्रकृतीनां च कौन्तेय राजा दीनां विभावयेत् ।
क्रमेण युगपद्द्वंद्वं व्यसनानां बलाबलम् ॥ ०१२ ॥

पीडनं स्तम्भनं चैव कोशभङ्गस्तथैव च ।
कार्यं यत्नेन शत्रूणां स्वराष्ट्रं रक्षता स्वयम् ॥ ०१३ ॥

न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता ।
कौन्तेय तं न हिंसेत यो महीं विजिगीषते ॥ ०१४ ॥

गणानां भेदने योगं गच्छेथाः सह मन्त्रिभिः ।
साधुसङ्ग्रहणाच्चैव पापनिग्रहणात्तथा ॥ ०१५ ॥

दुर्बलाश्चापि सततं नावष्टभ्या बलीयसा ।

तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः ॥ ०१६ ॥

यद्येवमभियायाच्च दुर्बलं बलवान्नृपः ।
सामादिभिरुपायैस्तं क्रमेण विनिवर्तयेत् ॥ ०१७ ॥

अशक्नुवंस्तु युद्धाय निष्पतेत्सह मन्त्रिभिः ।
कोशेन पौरैर्दण्डेन ये चान्ये प्रियकारिणः ॥ ०१८ ॥

असंभवे तु सर्वस्य यथामुख्येन निष्पतेत् ।
क्रमेणानेन मोक्षः स्याच्छरीरमपि केवलम् ॥ ०१९ ॥

---

# अध्याय ०१२

धृतराष्ट्र उवाच ॥

संधिविग्रहमप्यत्र पश्येथा राजसत्तम ।
द्वियोनिं त्रिविधोपायं बहुकल्पं युधिष्ठिर ॥ ००१ ॥

राजेन्द्र पर्युपासीथाश्छित्त्वा द्वैविध्यमात्मनः ।
तुष्टपुष्टबलः शत्रुरात्मवानिति च स्मरेत् ॥ ००२ ॥

पर्युपासनकाले तु विपरीतं विधीयते ।
आमर्दकाले राजेन्द्र व्यपसर्पस्ततो वरः ॥ ००३ ॥

व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः ।
कर्शनं भीषणं चैव युद्धे चापि बहुक्षयम् ॥ ००४ ॥

प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥ ००५ ॥

उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नरो यायाद्विपरीतमतोऽन्यथा ॥ ००६ ॥

आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तथा श्रेणीबलं च यत् ॥ ००७ ॥

तत्र मित्रबलं राजन्मौलेन न विशिष्यते ।
श्रेणीबलं भृतं चैव तुल्य एवेति मे मतिः ॥ ००८ ॥

तथा चारबलं चैव परस्परसमं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥ ००९ ॥

आपदश्चापि बोद्धव्या बहुरूपा नराधिप ।
भवन्ति राज्ञां कौरव्य यास्ताः पृथगतः शृणु ॥ ०१० ॥

विकल्पा बहवो राजन्नापदां पाण्डुनन्दन ।
सामादिभिरुपन्यस्य शमयेत्तान्नृपः सदा ॥ ०११ ॥

यात्रां यायाद्बलैर्युक्तो राजा षड्भिः परंतप ।
संयुक्तो देशकालाभ्यां बलैरात्मगुणैस्तथा ॥ ०१२ ॥

तुष्टपुष्टबलो यायाद्राजा वृद्ध्युदये रतः ।
आहूतश्चाप्यथो यायादनृतावपि पार्थिवः ॥ ०१३ ॥

स्थूणाश्मानं वाजिरथप्रधानां ; ध्वजद्रुमैः संवृतकूलरोधसम् ।
पदातिनागैर्बहुकर्दमां नदीं ; सपत्ननाशे नृपतिः प्रयायात् ॥ ०१४ ॥

अथोपपत्त्या शकटं पद्मं वज्रं च भारत ।

उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥ ०१५ ॥

सादयित्वा परबलं कृत्वा च बलहर्षणम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥ ०१६ ॥

लब्धं प्रशमयेद्राजा निक्षिपेद्धनिनो नरान् ।
ज्ञात्वा स्वविषयं तं च सामादिभिरुपक्रमेत् ॥ ०१७ ॥

सर्वथैव महाराज शरीरं धारयेदिह ।
प्रेत्येह चैव कर्तव्यमात्मनिःश्रेयसं परम् ॥ ०१८ ॥

एवं कुर्वञ्शुभा वाचो लोकेऽस्मिञ्शृणुते नृपः ।
प्रेत्य स्वर्गं तथाप्नोति प्रजा धर्मेण पालयन् ॥ ०१९ ॥

एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजाहितम् ।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव च ॥ ०२० ॥

भीष्मेण पूर्वमुक्तोऽसि कृष्णेन विदुरेण च ।
मयाप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम ॥ ०२१ ॥

एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण ।
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि ॥ ०२२ ॥

अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः ।
पालयेद्वापि धर्मेण प्रजास्तुल्यं फलं लभेत् ॥ ०२३ ॥

# धृतराष्ट्रवाक्यम्

## अध्याय ०१३

युधिष्ठिर उवाच ॥

एवमेतत्करिष्यामि यथात्थ पृथिवीपते ।
भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ ००१ ॥

भीष्मे स्वर्गमनुप्राप्ते गते च मधुसूदने ।
विदुरे सञ्जये चैव कोऽन्यो मां वक्तुमर्हति ॥ ००२ ॥

यत्तु मामनुशास्तीह भवानद्य हिते स्थितः ।
कर्तास्म्येतन्महीपाल निर्वृतो भव भारत ॥ ००३ ॥

वैशंपायन उवाच ॥

एवमुक्तः स राजर्षिर्धर्मराजेन धीमता ।
कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ॥ ००४ ॥

पुत्र विश्रम्यतां तावन्ममापि बलवाञ्श्रमः ।
इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ॥ ००५ ॥

तमासनगतं देवी गान्धारी धर्मचारिणी ।
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ ००६ ॥

अनुज्ञातः स्वयं तेन व्यासेनापि महर्षिणा ।
युधिष्ठिरस्यानुमते कदारण्यं गमिष्यसि ॥ ००७ ॥

धृतराष्ट्र उवाच ॥

गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना ।
युधिष्ठिरस्यानुमते गन्तास्मि नचिराद्वनम्  ॥ ००८  ॥

अहं हि नाम सर्वेषां तेषां दुर्द्यूतदेविनाम् ।
पुत्राणां दातुमिच्छामि प्रेत्यभावानुगं वसु  ॥ ००९  ॥

सर्वप्रकृतिसांनिध्यं कारयित्वा स्ववेश्मनि  ॥ ००९  ॥

वैशंपायन उवाच  ॥

इत्युक्त्वा धर्मराजाय प्रेषयामास पार्थिवः ।
स च तद्वचनात्सर्वं समानिन्ये महीपतिः  ॥ ०१०  ॥

ततो निष्क्रम्य नृपतिस्तस्मादन्तःपुरात्तदा ।
सर्वं सुहृज्जनं चैव सर्वाश्च प्रकृतीस्तथा  ॥ ०११  ॥

समवेतांश्च तान्सर्वान्पौरजानपदानथ  ॥ ०११  ॥

ब्राह्मणांश्च महीपालान्नानादेशसमागतान् ।
ततः प्राह महातेजा धृतराष्ट्रो महीपतिः  ॥ ०१२  ॥

शृण्वन्त्येकाग्रमनसो ब्राह्मणाः कुरुजाङ्गलाः ।
क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समागताः  ॥ ०१३  ॥

भवन्तः कुरवश्चैव बहुकालं सहोषिताः ।
परस्परस्य सुहृदः परस्परहिते रताः  ॥ ०१४  ॥

यदिदानीमहं ब्रूयामस्मिन्काल उपस्थिते ।
तथा भवद्भिः कर्तव्यमविचार्य वचो मम  ॥ ०१५  ॥

अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे ।

व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य च ॥ ०१६ ॥

भवन्तोऽप्यनुजानन्तु मा वोऽन्या भूद्विचारणा ॥ ०१६ ॥

अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती ।
न चान्येष्वस्ति देशेषु राज्ञामिति मतिर्मम ॥ ०१७ ॥

श्रान्तोऽस्मि वयसानेन तथा पुत्रविनाकृतः ।
उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः ॥ ०१८ ॥

युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत् ।
मन्ये दुर्योधनैश्वर्याद्विशिष्टमिति सत्तमाः ॥ ०१९ ॥

मम त्वन्धस्य वृद्धस्य हतपुत्रस्य का गतिः ।
ऋते वनं महाभागास्तन्मानुज्ञातुमर्हथ ॥ ०२० ॥

तस्य तद्वचनं श्रुत्वा सर्वे ते कुरुजाङ्गलाः ।
बाष्पसंदिग्धया वाचा रुरुदुर्भरतर्षभ ॥ ०२१ ॥

तानविब्रुवतः किञ्चिद्दुःखशोकपरायणान् ।
पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ०२२ ॥

---

# अध्याय ०१४

धृतराष्ट्र उवाच ॥

शंतनुः पालयामास यथावत्पृथिवीमिमाम् ।

तथा विचित्रवीर्यश्च भीष्मेण परिपालितः ॥ ००१ ॥

पालयामास वस्तातो विदितं वो नसंशयः ॥ ००१ ॥

यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।
स चापि पालयामास यथावत्तच्च वेत्थ ह ॥ ००२ ॥

मया च भवतां सम्यक्छुश्रूषा या कृतानघाः ।
असम्यग्वा महाभागास्तत्क्षन्तव्यमतन्द्रितैः ॥ ००३ ॥

यच्च दुर्योधनेनेदं राज्यं भुक्तमकण्टकम् ।
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥ ००४ ॥

तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम् ।
विमर्दः सुमहानासीदनयान्मत्कृतादथ ॥ ००५ ॥

तन्मया साधु वापीदं यदि वासाधु वै कृतम् ।
तद्वो हृदि न कर्तव्यं मामनुज्ञातुमर्हथ ॥ ००६ ॥

वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं जनाधिपः ।
पूर्वराज्ञां च पुत्रोऽयमिति कृत्वानुजानत ॥ ००७ ॥

इयं च कृपणा वृद्धा हतपुत्रा तपस्विनी ।
गान्धारी पुत्रशोकार्ता तुल्यं याचति वो मया ॥ ००८ ॥

हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा ।
अनुजानीत भद्रं वो व्रजावः शरणं च वः ॥ ००९ ॥

अयं च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च ॥ ०१० ॥

न जातु विषमं चैव गमिष्यति कदाचन ॥ ०१० ॥

चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः ।
लोकपालोपमा ह्येते सर्वे धर्मार्थदर्शिनः ॥ ०११ ॥

ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः ।
युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ ०१२ ॥

अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः ।
एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः ॥ ०१३ ॥

भवन्तोऽस्य च वीरस्य न्यासभूता मया कृताः ॥ ०१३ ॥

यद्येव तैः कृतं किञ्चिद्व्यलीकं वा सुतैर्मम ।
यद्यन्येन मदीयेन तदनुज्ञातुमर्हथ ॥ ०१४ ॥

भवद्भिर्हि न मे मन्युः कृतपूर्वः कथञ्चन ।
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः ॥ ०१५ ॥

तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणाम् ।
कृते याचामि वः सर्वान्गान्धारीसहितोऽनघाः ॥ ०१६ ॥

इत्युक्तास्तेन ते राज्ञा पौरजानपदा जनाः ।
नोचुर्बाष्पकलाः किञ्चिद्वीक्षां चक्रुः परस्परम् ॥ ०१७ ॥

# अध्याय ०१५

वैशंपायन उवाच ॥

एवमुक्तास्तु ते तेन पौरजानपदा जनाः ।
वृद्धेन राज्ञा कौरव्य नष्टसञ्ज्ञा इवाभवन् ॥ ००१ ॥

तूष्णींभूतांस्ततस्तांस्तु बाष्पकण्ठान्महीपतिः ।
धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ॥ ००२ ॥

वृद्धं मां हतपुत्रं च धर्मपत्न्या सहानया ।
विलपन्तं बहुविधं कृपणं चैव सत्तमाः ॥ ००३ ॥

पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै ।
वनवासाय धर्मज्ञा धर्मज्ञेन नृपेण च ॥ ००४ ॥

सोऽहं पुनः पुनर्याचे शिरसावनतोऽनघाः ।
गान्धार्या सहितं तन्मां समनुज्ञातुमर्हथ ॥ ००५ ॥

श्रुत्वा तु कुरुराजस्य वाक्यानि करुणानि ते ।
रुरुदुः सर्वतो राजन्समेताः कुरुजाङ्गलाः ॥ ००६ ॥

उत्तरीयैः करैश्चापि संछाद्य वदनानि ते ।
रुरुदुः शोकसंतप्ता मुहूर्तं पितृमातृवत् ॥ ००७ ॥

हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम् ।
दुःखं संधारयन्तः स्म नष्टसञ्ज्ञा इवाभवन् ॥ ००८ ॥

ते विनीय तमायासं कुरुराजवियोगजम् ।
शनैः शनैस्तदान्योन्यमब्रुवन्स्वमतान्युत ॥ ००९ ॥

ततः संधाय ते सर्वे वाक्यान्यथ समासतः ।
एकस्मिन्ब्राह्मणे राजन्नावेश्योचुर्नराधिपम्  ॥ ०१०  ॥

ततः स्वचरणे वृद्धः संमतोऽर्थविशारदः ।
साम्बाख्यो बह्वृचो राजन्वक्तुं समुपचक्रमे  ॥ ०११  ॥

अनुमान्य महाराजं तत्सदः संप्रभाष्य च ।
विप्रः प्रगल्भो मेधावी स राजानमुवाच ह  ॥ ०१२  ॥

राजन्वाक्यं जनस्यास्य मयि सर्वं समर्पितम् ।
वक्ष्यामि तदहं वीर तज्जुषस्व नराधिप  ॥ ०१३  ॥

यथा वदसि राजेन्द्र सर्वमेतत्तथा विभो ।
नात्र मिथ्या वचः किञ्चित्सुहृत्त्वं नः परस्परम्  ॥ ०१४  ॥

न जात्वस्य तु वंशस्य राज्ञां कश्चित्कदाचन ।
राजासीद्यः प्रजापालः प्रजानामप्रियो भवेत्  ॥ ०१५  ॥

पितृवद्भ्रातृवच्चैव भवन्तः पालयन्ति नः ।
न च दुर्योधनः किञ्चिदयुक्तं कृतवान्नृप  ॥ ०१६  ॥

यथा ब्रवीति धर्मज्ञो मुनिः सत्यवतीसुतः ।
तथा कुरु महाराज स हि नः परमो गुरुः  ॥ ०१७  ॥

त्यक्ता वयं तु भवता दुःखशोकपरायणाः ।
भविष्यामश्चिरं राजन्भवद्गुणशतैर्हृताः  ॥ ०१८  ॥

यथा शंतनुना गुप्ता राज्ञा चित्राङ्गदेन च ।
भीष्मवीर्योपगूढेन पित्रा च तव पार्थिव  ॥ ०१९  ॥

भवद्बुद्धियुजा चैव पाण्डुना पृथिवीक्षिता ।

तथा दुर्योधनेनापि राज्ञा सुपरिपालिताः ॥ ०२० ॥

न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप ।
पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे ॥ ०२१ ॥

वयमास्म यथा सम्यग्भवतो विदितं तथा ॥ ०२१ ॥

तथा वर्षसहस्राय कुन्तीपुत्रेण धीमता ।
पाल्यमाना धृतिमता सुखं विन्दामहे नृप ॥ ०२२ ॥

राजर्षीणां पुराणानां भवतां वंशधारिणाम् ।
कुरुसंवरणादीनां भरतस्य च धीमतः ॥ ०२३ ॥

वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ।
नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते ॥ ०२४ ॥

उषिताः स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते ॥ ०२५ ॥

यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति ।
भवन्तमनुनेष्यामि तत्रापि कुरुनन्दन ॥ ०२६ ॥

---

# अध्याय ०१६

ब्राह्मण उवाच ॥

न तद्दुर्योधनकृतं न च तद्भवता कृतम् ।
न कर्णसौबलाभ्यां च कुरवो यत्क्षयं गताः ॥ ००१ ॥

दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम् ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम्  ॥ ००२  ॥

अक्षौहिण्यो महाराज दशाष्टौ च समागताः ।
अष्टादशाहेन हता दशभिर्योधपुङ्गवैः  ॥ ००३  ॥

भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना ।
युयुधानेन वीरेण धृष्टद्युम्नेन चैव ह  ॥ ००४  ॥

चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैर्नृप ।
जनक्षयोऽयं नृपते कृतो दैवबलात्कृतैः  ॥ ००५  ॥

अवश्यमेव सङ्ग्रामे क्षत्रियेण विशेषतः ।
कर्तव्यं निधनं लोके शस्त्रेण क्षत्रबन्धुना  ॥ ००६  ॥

तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः ।
पृथिवी निहता सर्वा सहया सरथद्विपा  ॥ ००७  ॥

न स राजापराध्नोति पुत्रस्तव महामनाः ।
न भवान्न च ते भृत्या न कर्णो न च सौबलः  ॥ ००८  ॥

यद्विनष्टाः कुरुश्रेष्ठा राजानश्च सहस्रशः ।
सर्वं दैवकृतं तद्वै कोऽत्र किं वक्तुमर्हति  ॥ ००९  ॥

गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः ।
धर्मात्मानमतस्तुभ्यमनुजानीमहे सुतम्  ॥ ०१०  ॥

लभतां वीरलोकान्स ससहायो नराधिपः ।
द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखी  ॥ ०११  ॥

प्राप्स्यते च भवान्पुण्यं धर्मे च परमां स्थितिम् ।
वेद पुण्यं च कार्त्स्न्येन सम्यग्भरतसत्तम ॥ ०१२ ॥

दृष्टापदानाश्चास्माभिः पाण्डवाः पुरुषर्षभाः ।
समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ॥ ०१३ ॥

अनुवत्स्यन्ति चापीमाः समेषु विषमेषु च ।
प्रजाः कुरुकुलश्रेष्ठ पाण्डवाञ्शीलभूषणान् ॥ ०१४ ॥

ब्रह्मदेयाग्रहारांश्च परिहारांश्च पार्थिव ।
पूर्वराजातिसर्गांश्च पालयत्येव पाण्डवः ॥ ०१५ ॥

दीर्घदर्शी कृतप्रज्ञः सदा वैश्रवणो यथा ।
अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ॥ ०१६ ॥

अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभ ।
ऋजु पश्यति मेधावी पुत्रवत्पाति नः सदा ॥ ०१७ ॥

विप्रियं च जनस्यास्य संसर्गाद्धर्मजस्य वै ।
न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ॥ ०१८ ॥

मन्दा मृदुषु कौरव्यास्तीक्ष्णेष्वाशीविषोपमाः ।
वीर्यवन्तो महात्मानः पौराणां च हिते रताः ॥ ०१९ ॥

न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती ।
अस्मिञ्जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ॥ ०२० ॥

भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्धितम् ।
न पृष्ठतः करिष्यन्ति पौरजानपदा जनाः ॥ ०२१ ॥

अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः ।

मानवान्पालयिष्यन्ति भूत्वा धर्मपरायणाः ॥ ०२२ ॥

स राजन्मानसं दुःखमपनीय युधिष्ठिरात् ।
कुरु कार्याणि धर्म्याणि नमस्ते भरतर्षभ ॥ ०२३ ॥

वैशंपायन उवाच ॥

तस्य तद्वचनं धर्म्यमनुबन्धगुणोत्तरम् ।
साधु साध्विति सर्वः स जनः प्रतिगृहीतवान् ॥ ०२४ ॥

धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनः पुनः ।
विसर्जयामास तदा सर्वास्तु प्रकृतीः शनैः ॥ ०२५ ॥

स तैः संपूजितो राजा शिवेनावेक्षितस्तदा ।
प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ॥ ०२६ ॥

ततो विवेश भुवनं गान्धार्या सहितो नृपः ।
व्युष्टायां चैव शर्वर्यां यच्चकार निबोध तत् ॥ ०२७ ॥

---

# भीमसेनवाक्यम्

## अध्याय ०१७

वैशंपायन उवाच ॥

व्युषितायां रजन्यां तु धृतराष्ट्रोऽम्बिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ ००१ ॥

स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठिरं महातेजाः सर्वबुद्धिमतां वरः ॥ ००२ ॥

धृतराष्ट्रो महाराज वनवासाय दीक्षितः ।
गमिष्यति वनं राजन्कार्त्तिकीमागतामिमाम् ॥ ००३ ॥

स त्वा कुरुकुलश्रेष्ठ किञ्चिदर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ ००४ ॥

द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
पुत्राणां चैव सर्वेषां ये चास्य सुहृदो हताः ॥ ००५ ॥

यदि चाभ्यनुजानीषे सैन्धवापसदस्य च ॥ ००५ ॥

एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टः संपूजयामास गुडाकेशश्च पाण्डवः ॥ ००६ ॥

न तु भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ॥ ००७ ॥

अभिप्रायं विदित्वा तु भीमसेनस्य फल्गुनः ।
किरीटी किञ्चिदानम्य भीमं वचनमब्रवीत् ॥ ००८ ॥

भीम राजा पिता वृद्धो वनवासाय दीक्षितः ।
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदेहिकम् ॥ ००९ ॥

भवता निर्जितं वित्तं दातुमिच्छति कौरवः ।
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि ॥ ०१० ॥

दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचति ।

याचितो यः पुरास्माभिः पश्य कालस्य पर्ययम्  ॥ ०११  ॥

योऽसौ पृथिव्याः कृत्स्नाया भर्ता भूत्वा नराधिपः ।
परैर्विनिहतापत्यो वनं गन्तुमभीप्सति  ॥ ०१२  ॥

मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम् ।
अयशस्यमतोऽन्यत्स्यादधर्म्यं च महाभुज  ॥ ०१३  ॥

राजानमुपतिष्ठस्व ज्येष्ठं भ्रातरमीश्वरम् ।
अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ  ॥ ०१४  ॥

एवं ब्रुवाणं कौन्तेयं धर्मराजोऽभ्यपूजयत्  ॥ ०१४  ॥

भीमसेनस्तु सक्रोधः प्रोवाचेदं वचस्तदा ।
वयं भीष्मस्य कुर्मेह प्रेतकार्याणि फल्गुन  ॥ ०१५  ॥

सोमदत्तस्य नृपतेर्भूरिश्रवस एव च ।
बाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः  ॥ ०१६  ॥

अन्येषां चैव सुहृदां कुन्ती कर्णाय दास्यति ।
श्राद्धानि पुरुषव्याघ्र मादात्कौरवको नृपः  ॥ ०१७  ॥

इति मे वर्तते बुद्धिर्मा वो नन्दन्तु शत्रवः ।
कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः  ॥ ०१८  ॥

यैरियं पृथिवी सर्वा घातिता कुलपांसनैः  ॥ ०१८  ॥

कुतस्त्वमद्य विस्मृत्य वैरं द्वादशवार्षिकम् ।
अज्ञातवासगमनं द्रौपदीशोकवर्धनम्  ॥ ०१९  ॥

क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मास्वभवत्तदा  ॥ ०१९  ॥

कृष्णाजिनोपसंवीतो हृताभरणभूषणः ।
सार्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान् ॥ ०२० ॥

क्व तदा द्रोणभीष्मौ तौ सोमदत्तोऽपि वाभवत् ॥ ०२० ॥

यत्र त्रयोदश समा वने वन्येन जीवसि ।
न तदा त्वा पिता ज्येष्ठः पितृत्वेनाभिवीक्षते ॥ ०२१ ॥

किं ते तद्विस्मृतं पार्थ यदेष कुलपांसनः ।
दुर्वृत्तो विदुरं प्राह द्यूते किं जितमित्युत ॥ ०२२ ॥

तमेवंवादिनं राजा कुन्तीपुत्रो युधिष्ठिरः ।
उवाच भ्रातरं धीमाञ्जोषमास्वेति भर्त्सयन् ॥ ०२३ ॥

---

# अर्जुनयुधिष्ठिरयोः वाक्ये

## अध्याय ०१८

अर्जुन उवाच ॥

भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वक्तुमुत्सहे ।
धृतराष्ट्रो हि राजर्षिः सर्वथा मानमर्हति ॥ ००१ ॥

न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतानि च ।
असंभिन्नार्थमर्यादाः साधवः पुरुषोत्तमाः ॥ ००२ ॥

इदं मद्वचनात्क्षत्तः कौरवं ब्रूहि पार्थिवम् ।
यावदिच्छति पुत्राणां दातुं तावद्ददाम्यहम् ॥ ००३ ॥

भीष्मादीनां च सर्वेषां सुहृदामुपकारिणाम् ।
मम कोशादिति विभो मा भूद्भीमः सुदुर्मनाः ॥ ००४ ॥

वैशंपायन उवाच ॥

इत्युक्ते धर्मराजस्तमर्जुनं प्रत्यपूजयत् ।
भीमसेनः कटाक्षेण वीक्षां चक्रे धनञ्जयम् ॥ ००५ ॥

ततः स विदुरं धीमान्वाक्यमाह युधिष्ठिरः ।
न भीमसेने कोपं स नृपतिः कर्तुमर्हति ॥ ००६ ॥

परिक्लिष्टो हि भीमोऽयं हिमवृष्ट्यातपादिभिः ।
दुःखैर्बहुविधैर्धीमानरण्ये विदितं तव ॥ ००७ ॥

किं तु मद्वचनाद्ब्रूहि राजानं भरतर्षभम् ।
यद्यदिच्छसि यावच्च गृह्यतां मद्गृहादिति ॥ ००८ ॥

यन्मात्सर्यमयं भीमः करोति भृशदुःखितः ।
न तन्मनसि कर्तव्यमिति वाच्यः स पार्थिवः ॥ ००९ ॥

यन्ममास्ति धनं किञ्चिदर्जुनस्य च वेश्मनि ।
तस्य स्वामी महाराज इति वाच्यः स पार्थिवः ॥ ०१० ॥

ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययः ।
पुत्राणां सुहृदां चैव गच्छत्वानृण्यमद्य सः ॥ ०११ ॥

इदं चापि शरीरं मे तवायत्तं जनाधिप ।
धनानि चेति विद्धि त्वं क्षत्तर्नास्त्यत्र संशयः ॥ ०१२ ॥

# विदुरवाक्यम्

## अध्याय ०१९

वैशंपायन उवाच ॥

एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः ।
धृतराष्ट्रमुपेत्येदं वाक्यमाह महार्थवत् ॥ ००१ ॥

उक्तो युधिष्ठिरो राजा भवद्वचनमादितः ।
स च संश्रुत्य वाक्यं ते प्रशशंस महाद्युतिः ॥ ००२ ॥

बीभत्सुश्च महातेजा निवेदयति ते गृहान् ।
वसु तस्य गृहे यच्च प्राणानपि च केवलान् ॥ ००३ ॥

धर्मराजश्च पुत्रस्ते राज्यं प्राणान्धनानि च ।
अनुजानाति राजर्षे यच्चान्यदपि किञ्चन ॥ ००४ ॥

भीमस्तु सर्वदुःखानि संस्मृत्य बहुलान्युत ।
कृच्छ्रादिव महाबाहुरनुमन्ये विनिःश्वसन् ॥ ००५ ॥

स राज्ञा धर्मशीलेन भ्रात्रा बीभत्सुना तथा ।
अनुनीतो महाबाहुः सौहृदे स्थापितोऽपि च ॥ ००६ ॥

न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट् ।
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरेत् ॥ ००७ ॥

एवंप्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप ।
युद्धे क्षत्रियधर्मे च निरतोऽयं वृकोदरः ॥ ००८ ॥

वृकोदरकृते चाहमर्जुनश्च पुनः पुनः ।
प्रसादयाव नृपते भवान्प्रभुरिहास्ति यत् ॥ ००९ ॥

प्रददातु भवान्वित्तं यावदिच्छसि पार्थिव ।
त्वमीश्वरो नो राज्यस्य प्राणानां चेति भारत ॥ ०१० ॥

ब्रह्मदेयाग्रहारांश्च पुत्राणां चौर्ध्वदेहिकम् ।
इतो रत्नानि गाश्चैव दासीदासमजाविकम् ॥ ०११ ॥

आनयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु ।
दीनान्धकृपणेभ्यश्च तत्र तत्र नृपाज्ञया ॥ ०१२ ॥

बह्वन्नरसपानाढ्याः सभा विदुर कारय ।
गवां निपानान्यन्यच्च विविधं पुण्यकर्म यत् ॥ ०१३ ॥

इति मामब्रवीद्राजा पार्थश्चैव धनञ्जयः ।
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति ॥ ०१४ ॥

इत्युक्तो विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तत् ।
मनश्चक्रे महादाने कार्त्तिक्यां जनमेजय ॥ ०१५ ॥

# श्राद्धयज्ञः

## अध्याय ०२०

वैशंपायन उवाच ॥

विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः ।
प्रीतिमानभवद्राजा राज्ञो जिष्णोश्च कर्मणा ॥ ००१ ॥

ततोऽभिरूपान्भीष्माय ब्राह्मणानृषिसत्तमान् ।
पुत्रार्थे सुहृदां चैव स समीक्ष्य सहस्रशः ॥ ००२ ॥

कारयित्वान्नपानानि यानान्याच्छादनानि च ।
सुवर्णमणिरत्नानि दासीदासपरिच्छदान् ॥ ००३ ॥

कम्बलाजिनरत्नानि ग्रामान्क्षेत्रानजाविकम् ।
अलङ्कारान्गजानश्वान्कन्याश्चैव वरस्त्रियः ॥ ००४ ॥

आदिश्यादिश्य विप्रेभ्यो ददौ स नृपसत्तमः ॥ ००४ ॥

द्रोणं सङ्कीर्त्य भीष्मं च सोमदत्तं च बाह्लिकम् ।
दुर्योधनं च राजानं पुत्रांश्चैव पृथक्पृथक् ॥ ००५ ॥

जयद्रथपुरोगांश्च सुहृदश्चैव सर्वशः ॥ ००५ ॥

स श्राद्धयज्ञो ववृधे बहुगोधनदक्षिणः ।
अनेकधनरत्नौघो युधिष्ठिरमते तदा ॥ ००६ ॥

अनिशं यत्र पुरुषा गणका लेखकास्तथा ।
युधिष्ठिरस्य वचनात्तदापृच्छन्ति तं नृपम् ॥ ००७ ॥

आज्ञापय किमेतेभ्यः प्रदेयं दीयतामिति ।
तदुपस्थितमेवात्र वचनान्ते प्रदृश्यते ॥ ००८ ॥

शते देये दशशतं सहस्रे चायुतं तथा ।
दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ॥ ००९ ॥

एवं स वसुधाराभिर्वर्षमाणो नृपाम्बुदः ।
तर्पयामास विप्रांस्तान्वर्षन्भूमिमिवाम्बुदः ॥ ०१० ॥

ततोऽनन्तरमेवात्र सर्ववर्णान्महीपतिः ।
अन्नपानरसौघेन प्लावयामास पार्थिवः ॥ ०११ ॥

सवस्त्रफेनरत्नौघो मृदङ्गनिनदस्वनः ।
गवाश्वमकरावर्तो नारीरत्नमहाकरः ॥ ०१२ ॥

ग्रामाग्रहारकुल्याढ्यो मणिहेमजलार्णवः ।
जगत्संप्लावयामास धृतराष्ट्रदयाम्बुधिः ॥ ०१३ ॥

एवं स पुत्रपौत्राणां पितृणामात्मनस्तथा ।
गान्धार्याश्च महाराज प्रददावौर्ध्वदेहिकम् ॥ ०१४ ॥

परिश्रान्तो यदासीत्स ददद्दानान्यनेकशः ।
ततो निर्वर्तयामास दानयज्ञं कुरूद्वहः ॥ ०१५ ॥

एवं स राजा कौरव्यश्चक्रे दानमहोत्सवम् ।
नटनर्तकलास्याढ्यं बह्वन्नरसदक्षिणम् ॥ ०१६ ॥

दशाहमेवं दानानि दत्त्वा राजाम्बिकासुतः ।
बभूव पुत्रपौत्राणामनृणो भरतर्षभ ॥ ०१७ ॥

# धृतराष्ट्रस्य वनगमनम्

## अध्याय ०२१

वैशंपायन उवाच ॥

ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः ।
आहूय पाण्डवान्वीरान्वनवासकृतक्षणः ॥ ००१ ॥

गान्धारीसहितो धीमानभिनन्द्य यथाविधि ।
कार्त्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ॥ ००२ ॥

अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः ।
वधूपरिवृतो राजा निर्ययौ भवनात्ततः ॥ ००३ ॥

ततः स्त्रियः कौरवपाण्डवानां ; याश्चाप्यन्याः कौरवराजवंश्याः ।
तासां नादः प्रादुरासीत्तदानीं ; वैचित्रवीर्ये नृपतौ प्रयाते ॥ ००४ ॥

ततो लाजैः सुमनोभिश्च राजा ; विचित्राभिस्तद्गृहं पूजयित्वा ।
संयोज्यार्थैर्भृत्यजनं च सर्वं ; ततः समुत्सृज्य ययौ नरेन्द्रः ॥ ००५ ॥

ततो राजा प्राञ्जलिर्वेपमानो ; युधिष्ठिरः सस्वनं बाष्पकण्ठः ।
विलप्योच्चैर्हा महाराज साधो ; क्व गन्तासीत्यपतत्तात भूमौ ॥ ००६ ॥

तथार्जुनस्तीव्रदुःखाभितप्तो ; मुहुर्मुहुर्निःश्वसन्भारताग्र्यः ।
युधिष्ठिरं मैवमित्येवमुक्त्वा ; निगृह्याथोदीधरत्सीदमानः ॥ ००७ ॥

वृकोदरः फल्गुनश्चैव वीरौ ; माद्रीपुत्रौ विदुरः सञ्जयश्च ।

वैश्यापुत्रः सहितो गौतमेन ; धौम्यो विप्राश्चान्वयुर्बाष्पकण्ठाः ॥ ००८ ॥

कुन्ती गान्धारीं बद्धनेत्रां व्रजन्तीं ; स्कन्धासक्तं हस्तमथोद्वहन्ती ।
राजा गान्धार्याः स्कन्धदेशेऽवसज्य ; पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ ००९ ॥

तथा कृष्णा द्रौपदी यादवी च ; बालापत्या चोत्तरा कौरवी च ।
चित्राङ्गदा याश्च काश्चित्स्त्रियोऽन्याः ; सार्धं राज्ञा प्रस्थितास्ता वधूभिः ॥ ०१० ॥

तासां नादो रुदतीनां तदासी ;द्राजन्दुःखात्कुररीणामिवोच्चैः ।
ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां ; विड्शूद्राणां चैव नार्यः समन्तात् ॥ ०११ ॥

तन्निर्याणे दुःखितः पौरवर्गो ; गजाह्वयेऽतीव बभूव राजन् ।
यथा पूर्वं गच्छतां पाण्डवानां ; द्यूते राजन्कौरवाणां सभायाम् ॥ ०१२ ॥

या नापश्यच्चन्द्रमा नैव सूर्यो ; रामाः कदाचिदपि तस्मिन्नरेन्द्रे ।
महावनं गच्छति कौरवेन्द्रे ; शोकेनार्ता राजमार्गं प्रपेदुः ॥ ०१३ ॥

---

# कुन्तीवाक्यम्

## अध्याय ०२२

वैशंपायन उवाच ॥

ततः प्रासादहर्म्येषु वसुधायां च पार्थिव ।
स्त्रीणां च पुरुषाणां च सुमहान्निस्वनोऽभवत् ॥ ००१ ॥

स राजा राजमार्गेण नृनारीसङ्कुलेन च ।
कथञ्चिन्निर्ययौ धीमान्वेपमानः कृताञ्जलिः ॥ ००२ ॥

स वर्धमानद्वारेण निर्ययौ गजसाह्वयात् ।
विसर्जयामास च तं जनौघं स मुहुर्मुहुः ॥ ००३ ॥

वनं गन्तुं च विदुरो राज्ञा सह कृतक्षणः ।
सञ्जयश्च महामात्रः सूतो गावल्गणिस्तथा ॥ ००४ ॥

कृपं निवर्तयामास युयुत्सुं च महारथम् ।
धृतराष्ट्रो महीपालः परिदाय युधिष्ठिरे ॥ ००५ ॥

निवृत्ते पौरवर्गे तु राजा सान्तःपुरस्तदा ।
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष सः ॥ ००६ ॥

सोऽब्रवीन्मातरं कुन्तीमुपेत्य भरतर्षभ ।
अहं राजानमन्विष्ये भवती विनिवर्तताम् ॥ ००७ ॥

वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि ।
राजा यात्वेष धर्मात्मा तपसे धृतनिश्चयः ॥ ००८ ॥

इत्युक्ता धर्मराजेन बाष्पव्याकुललोचना ।
जगादैवं तदा कुन्ती गान्धारीं परिगृह्य ह ॥ ००९ ॥

सहदेवे महाराज मा प्रमादं कृथाः क्वचित् ।
एष मामनुरक्तो हि राजंस्त्वां चैव नित्यदा ॥ ०१० ॥

कर्णं स्मरेथाः सततं सङ्ग्रामेष्वपलायिनम् ।
अवकीर्णो हि स मया वीरो दुष्प्रज्ञया तदा ॥ ०११ ॥

आयसं हृदयं नूनं मन्दाया मम पुत्रक ।

यत्सूर्यजमपश्यन्त्याः शतधा न विदीर्यते ॥ ०१२ ॥

एवङ्गते तु किं शक्यं मया कर्तुमरिंदम ।
मम दोषोऽयमत्यर्थं ख्यापितो यन्न सूर्यजः ॥ ०१३ ॥

तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमम् ॥ ०१३ ॥

सदैव भ्रातृभिः सार्धमग्रजस्यारिमर्दन ।
द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्शन ॥ ०१४ ॥

भीमसेनार्जुनौ चैव नकुलश्च कुरूद्वह ।
समाधेयास्त्वया वीर त्वय्यद्य कुलधूर्गता ॥ ०१५ ॥

श्वश्रूश्वशुरयोः पादाञ्शुश्रूषन्ती वने त्वहम् ।
गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ॥ ०१६ ॥

एवमुक्तः स धर्मात्मा भ्रातृभिः सहितो वशी ।
विषादमगमत्तीव्रं न च किञ्चिदुवाच ह ॥ ०१७ ॥

स मुहूर्तमिव ध्यात्वा धर्मपुत्रो युधिष्ठिरः ।
उवाच मातरं दीनश्चिन्ताशोकपरायणः ॥ ०१८ ॥

किमिदं ते व्यवसितं नैवं त्वं वक्तुमर्हसि ।
न त्वामभ्यनुजानामि प्रसादं कर्तुमर्हसि ॥ ०१९ ॥

व्यरोचयः पुरा ह्यस्मानुत्साह्य प्रियदर्शने ।
विदुराया वचोभिस्त्वमस्मान्न त्यक्तुमर्हसि ॥ ०२० ॥

निहत्य पृथिवीपालान्राज्यं प्राप्तमिदं मया ।
तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ॥ ०२१ ॥

क्व सा बुद्धिरियं चाद्य भवत्या या श्रुता मया ।
क्षत्रधर्मे स्थितिं ह्युक्त्वा तस्याश्चलितुमिच्छसि ॥ ०२२ ॥

अस्मानुत्सृज्य राज्यं च स्नुषां चेमां यशस्विनीम् ।
कथं वत्स्यसि शून्येषु वनेष्वम्ब प्रसीद मे ॥ ०२३ ॥

इति बाष्पकलां वाचं कुन्ती पुत्रस्य शृण्वती ।
जगामैवाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥ ०२४ ॥

यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रनिर्जितम् ।
प्राप्तव्या राजधर्माश्च तदेयं ते कुतो मतिः ॥ ०२५ ॥

किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् ।
कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि ॥ ०२६ ॥

वनाच्चापि किमानीता भवत्या बालका वयम् ।
दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा ॥ ०२७ ॥

प्रसीद मातर्मा गास्त्वं वनमद्य यशस्विनि ।
श्रियं यौधिष्ठिरीं तावद्भुङ्क्ष्व पार्थबलार्जिताम् ॥ ०२८ ॥

इति सा निश्चितैवाथ वनवासकृतक्षणा ।
लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः ॥ ०२९ ॥

द्रौपदी चान्वयाच्छ्वश्रूं विषण्णवदना तदा ।
वनवासाय गच्छन्तीं रुदती भद्रया सह ॥ ०३० ॥

सा पुत्रान्रुदतः सर्वान्मुहुर्मुहुरवेक्षती ।
जगामैव महाप्राज्ञा वनाय कृतनिश्चया ॥ ०३१ ॥

अन्वयुः पाण्डवास्तां तु सभृत्यान्तःपुरास्तदा ।

ततः प्रमृज्य साश्रूणि पुत्रान्वचनमब्रवीत् ॥ ०३२ ॥

---

# अध्याय ०२३

कुन्त्युवाच ॥

एवमेतन्महाबाहो यथा वदसि पाण्डव ।
कृतमुद्धर्षणं पूर्वं मया वः सीदतां नृप ॥ ००१ ॥

द्यूतापहृतराज्यानां पतितानां सुखादपि ।
ज्ञातिभिः परिभूतानां कृतमुद्धर्षणं मया ॥ ००२ ॥

कथं पाण्डोर्न नश्येत संततिः पुरुषर्षभाः ।
यशश्च वो न नश्येत इति चोद्धर्षणं कृतम् ॥ ००३ ॥

यूयमिन्द्रसमाः सर्वे देवतुल्यपराक्रमाः ।
मा परेषां मुखप्रेक्षाः स्थेत्येवं तत्कृतं मया ॥ ००४ ॥

कथं धर्मभृतां श्रेष्ठो राजा त्वं वासवोपमः ।
पुनर्वने न दुःखी स्या इति चोद्धर्षणं कृतम् ॥ ००५ ॥

नागायुतसमप्राणः ख्यातविक्रमपौरुषः ।
नायं भीमोऽत्ययं गच्छेदिति चोद्धर्षणं कृतम् ॥ ००६ ॥

भीमसेनादवरजस्तथायं वासवोपमः ।
विजयो नावसीदेत इति चोद्धर्षणं कृतम् ॥ ००७ ॥

नकुलः सहदेवश्च तथेमौ गुरुवर्तिनौ ।
क्षुधा कथं न सीदेतामिति चोद्धर्षणं कृतम् ॥ ००८ ॥

इयं च बृहती श्यामा श्रीमत्यायतलोचना ।
वृथा सभातले क्लिष्टा मा भूदिति च तत्कृतम् ॥ ००९ ॥

प्रेक्षन्त्या मे तदा ह्रीमां वेपन्तीं कदलीमिव ।
स्त्रीधर्मिणीमनिन्द्याङ्गीं तथा द्यूतपराजिताम् ॥ ०१० ॥

दुःशासनो यदा मौढ्याद्दासीवत्पर्यकर्षत ।
तदैव विदितं मह्यं पराभूतमिदं कुलम् ॥ ०११ ॥

विषण्णाः कुरवश्चैव तदा मे श्वशुरादयः ।
यदैषा नाथमिच्छन्ती व्यलपत्कुररी यथा ॥ ०१२ ॥

केशपक्षे परामृष्टा पापेन हतबुद्धिना ।
यदा दुःशासनेनैषा तदा मुह्याम्यहं नृप ॥ ०१३ ॥

युष्मत्तेजोविवृद्ध्यर्थं मया ह्युद्धर्षणं कृतम् ।
तदानीं विदुरावाक्यैरिति तद्वित्त पुत्रकाः ॥ ०१४ ॥

कथं न राजवंशोऽयं नश्येत्प्राप्य सुतान्मम ।
पाण्डोरिति मया पुत्र तस्मादुद्धर्षणं कृतम् ॥ ०१५ ॥

न तस्य पुत्रः पौत्रौ वा कुत एव स पार्थिव ।
लभते सुकृता.ण्ल्लोकान्यस्माद्वंशः प्रणश्यति ॥ ०१६ ॥

भुक्तं राज्यफलं पुत्रा भर्तुर्मे विपुलं पुरा ।
महादानानि दत्तानि पीतः सोमो यथाविधि ॥ ०१७ ॥

साहं नात्मफलार्थं वै वासुदेवमचूचुदम् ।

विदुरायाः प्रलापैस्तैः प्लावनार्थं तु तत्कृतम्  ॥ ०१८  ॥

नाहं राज्यफलं पुत्र कामये पुत्रनिर्जितम् ।
पतिलोकानहं पुण्यान्कामये तपसा विभो  ॥ ०१९  ॥

श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः ।
तपसा शोषयिष्यामि युधिष्ठिर कलेवरम्  ॥ ०२०  ॥

निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह ।
धर्मे ते धीयतां बुद्धिर्मनस्ते महदस्तु च  ॥ ०२१  ॥

---

# अध्याय ०२४

वैशंपायन उवाच  ॥

कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम ।
व्रीडिताः संन्यवर्तन्त पाञ्चाल्या सहितानघाः  ॥ ००१  ॥

ततः शब्दो महानासीत्सर्वेषामेव भारत ।
अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथागताम्  ॥ ००२  ॥

प्रदक्षिणमथावृत्य राजानं पाण्डवास्तदा ।
अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै  ॥ ००३  ॥

ततोऽब्रवीन्महाराजो धृतराष्ट्रोऽम्बिकासुतः ।
गान्धारीं विदुरं चैव समाभाष्य निगृह्य च  ॥ ००४  ॥

युधिष्ठिरस्य जननी देवी साधु निवर्त्यताम् ।

यथा युधिष्ठिरः प्राह तत्सर्वं सत्यमेव हि ॥ ००५ ॥

पुत्रैश्वर्यं महदिदमपास्य च महाफलम् ।
का नु गच्छेद्वनं दुर्गं पुत्रानुत्सृज्य मूढवत् ॥ ००६ ॥

राज्यस्थया तपस्तप्तं दानं दत्तं व्रतं कृतम् ।
अनया शक्यमद्येह श्रूयतां च वचो मम ॥ ००७ ॥

गान्धारि परितुष्टोऽस्मि वध्वाः शुश्रूषणेन वै ।
तस्मात्त्वमेनां धर्मज्ञे समनुज्ञातुमर्हसि ॥ ००८ ॥

इत्युक्ता सौबलेयी तु राज्ञा कुन्तीमुवाच ह ।
तत्सर्वं राजवचनं स्वं च वाक्यं विशेषवत् ॥ ००९ ॥

न च सा वनवासाय देवीं कृतमतिं तदा ।
शक्नोत्युपावर्तयितुं कुन्तीं धर्मपरां सतीम् ॥ ०१० ॥

तस्यास्तु तं स्थिरं ज्ञात्वा व्यवसायं कुरुस्त्रियः ।
निवृत्तांश्च कुरुश्रेष्ठान्दृष्ट्वा प्ररुरुदुस्तदा ॥ ०११ ॥

उपावृत्तेषु पार्थेषु सर्वेष्वन्तःपुरेषु च ।
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा ॥ ०१२ ॥

पाण्डवा अपि दीनास्ते दुःखशोकपरायणाः ।
यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥ ०१३ ॥

तदहृष्टमिवाकूजं गतोत्सवमिवाभवत् ।
नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥ ०१४ ॥

सर्वे चासन्निरुत्साहाः पाण्डवा जातमन्यवः ।
कुन्त्या हीनाः सुदुःखार्ता वत्सा इव विनाकृताः ॥ ०१५ ॥

धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम् ।
ततो भागीरथीतीरे निवासमकरोत्प्रभुः ॥ ०१६ ॥

प्रादुष्कृता यथान्यायमग्नयो वेदपारगैः ।
व्यराजन्त द्विजश्रेष्ठैस्तत्र तत्र तपोधनैः ॥ ०१७ ॥

प्रादुष्कृताग्निरभवत्स च वृद्धो नराधिपः ॥ ०१७ ॥

स राजाग्नीन्पर्युपास्य हुत्वा च विधिवत्तदा ।
संध्यागतं सहस्रांशुमुपातिष्ठत भारत ॥ ०१८ ॥

विदुरः सञ्जयश्चैव राज्ञः शय्यां कुशैस्ततः ।
चक्रतुः कुरुवीरस्य गान्धार्याश्चाविदूरतः ॥ ०१९ ॥

गान्धार्याः संनिकर्षे तु निषसाद कुशेष्वथ ।
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता ॥ ०२० ॥

तेषां संश्रवणे चापि निषेदुर्विदुरादयः ।
याजकाश्च यथोद्देशं द्विजा ये चानुयायिनः ॥ ०२१ ॥

प्राधीतद्विजमुख्या सा संप्रज्वालितपावका ।
बभूव तेषां रजनी ब्राह्मीव प्रीतिवर्धनी ॥ ०२२ ॥

ततो रात्र्यां व्यतीतायां कृतपूर्वाह्णिकक्रियाः ।
हुत्वाग्निं विधिवत्सर्वे प्रययुस्ते यथाक्रमम् ॥ ०२३ ॥

उदङ्मुखा निरीक्षन्त उपवासपरायणाः ॥ ०२३ ॥

स तेषामतिदुःखोऽभून्निवासः प्रथमेऽहनि ।
शोचतां शोच्यमानानां पौरजानपदैर्जनैः ॥ ०२४ ॥

# धृतराष्ट्रादीनां व्यासाश्रमगमनम्

## अध्याय ०२५

वैशंपायन उवाच ॥

ततो भागीरथीतीरे मेध्ये पुण्यजनोचिते ।
निवासमकरोद्राजा विदुरस्य मते स्थितः ॥ ००१ ॥

तत्रैनं पर्युपातिष्ठन्ब्राह्मणा राष्ट्रवासिनः ।
क्षत्रविड्शूद्रसंघाश्च बहवो भरतर्षभ ॥ ००२ ॥

स तैः परिवृतो राजा कथाभिरभिनन्द्य तान् ।
अनुजज्ञे सशिष्यान्वै विधिवत्प्रतिपूज्य च ॥ ००३ ॥

सायाह्ने स महीपालस्ततो गङ्गामुपेत्य ह ।
चकार विधिवच्छौचं गान्धारी च यशस्विनी ॥ ००४ ॥

तथैवान्ये पृथक्सर्वे तीर्थेष्वाप्लुत्य भारत ।
चक्रुः सर्वाः क्रियास्तत्र पुरुषा विदुरादयः ॥ ००५ ॥

कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा ।
गान्धारीं च पृथा राजन्गङ्गातीरमुपानयत् ॥ ००६ ॥

राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः ।
जुहाव तत्र वह्निं स नृपतिः सत्यसङ्गरः ॥ ००७ ॥

ततो भागीरथीतीरात्कुरुक्षेत्रं जगाम सः ।
सानुगो नृपतिर्विद्वान्नियतः संयतेन्द्रियः ॥ ००८ ॥

तत्राश्रमपदं धीमानभिगम्य स पार्थिवः ।
आससादाथ राजर्षिः शतयूपं मनीषिणम् ॥ ००९ ॥

स हि राजा महानासीत्केकयेषु परंतपः ।
स पुत्रं मनुजैश्वर्ये निवेश्य वनमाविशत् ॥ ०१० ॥

तेनासौ सहितो राजा ययौ व्यासाश्रमं तदा ।
तत्रैनं विधिवद्राजन्प्रत्यगृह्णात्कुरूद्वहम् ॥ ०११ ॥

स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः ।
शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा ॥ ०१२ ॥

तस्मै सर्वं विधिं राजन्राजाचख्यौ महामतिः ।
आरण्यकं महाराज व्यासस्यानुमते तदा ॥ ०१३ ॥

एवं स तपसा राजा धृतराष्ट्रो महामनाः ।
योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा ॥ ०१४ ॥

तथैव देवी गान्धारी वल्कलाजिनवासिनी ।
कुन्त्या सह महाराज समानव्रतचारिणी ॥ ०१५ ॥

कर्मणा मनसा वाचा चक्षुषा चापि ते नृप ।
संनियम्येन्द्रियग्राममास्थिताः परमं तपः ॥ ०१६ ॥

त्वगस्थिभूतः परिशुष्कमांसो ; जटाजिनी वल्कलसंवृताङ्गः ।
स पार्थिवस्तत्र तपश्चचार ; महर्षिवत्तीव्रमपेतदोषः ॥ ०१७ ॥

क्षत्ता च धर्मार्थविदग्र्यबुद्धिः ; ससञ्जयस्तं नृपतिं सदारम् ।
उपाचरद्घोरतपो जितात्मा ; तदा कृशो वल्कलचीरवासाः ॥ ०१८ ॥

---

# अध्याय ०२६

वैशंपायन उवाच ॥

ततस्तस्मिन्मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः ।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ ००१ ॥

द्वैपायनः सशिष्यश्च सिद्धाश्चान्ये मनीषिणः ।
शतयूपश्च राजर्षिर्वृद्धः परमधार्मिकः ॥ ००२ ॥

तेषां कुन्ती महाराज पूजां चक्रे यथाविधि ।
ते चापि तुतुषुस्तस्यास्तापसाः परिचर्यया ॥ ००३ ॥

तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः ।
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ॥ ००४ ॥

कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्तदा ।
कथामिमामकथयत्सर्वप्रत्यक्षदर्शिवान् ॥ ००५ ॥

पुरा प्रजापतिसमो राजासीदकुतोभयः ।
सहस्रचित्य इत्युक्तः शतयूपपितामहः ॥ ००६ ॥

स पुत्रे राज्यमासज्य ज्येष्ठे परमधार्मिके ।
सहस्रचित्यो धर्मात्मा प्रविवेश वनं नृपः ॥ ००७ ॥

स गत्वा तपसः पारं दीप्तस्य स नराधिपः ।
पुरंदरस्य संस्थानं प्रतिपेदे महामनाः ॥ ००८ ॥

दृष्टपूर्वः स बहुशो राजन्संपतता मया ।
महेन्द्रसदने राजा तपसा दग्धकिल्बिषः ॥ ००९ ॥

तथा शैलालयो राजा भगदत्तपितामहः ।
तपोबलेनैव नृपो महेन्द्रसदनं गतः ॥ ०१० ॥

तथा पृषध्रो नामासीद्राजा वज्रधरोपमः ।
स चापि तपसा लेभे नाकपृष्ठमितो नृपः ॥ ०११ ॥

अस्मिन्नरण्ये नृपते मान्धातुरपि चात्मजः ।
पुरुकुत्सो नृपः सिद्धिं महतीं समवाप्तवान् ॥ ०१२ ॥

भार्या समभवद्यस्य नर्मदा सरितां वरा ।
सोऽस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः ॥ ०१३ ॥

शशलोमा च नामासीद्राजा परमधार्मिकः ।
स चाप्यस्मिन्वने तप्त्वा तपो दिवमवाप्तवान् ॥ ०१४ ॥

द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम् ।
राजन्नवाप्य दुष्प्रापां सिद्धिमग्र्यां गमिष्यसि ॥ ०१५ ॥

त्वं चापि राजशार्दूल तपसोऽन्ते श्रिया वृतः ।
गान्धारीसहितो गन्ता गतिं तेषां महात्मनाम् ॥ ०१६ ॥

पाण्डुः स्मरति नित्यं च बलहन्तुः समीपतः ।
त्वां सदैव महीपाल स त्वां श्रेयसि योक्ष्यति ॥ ०१७ ॥

तव शुश्रूषया चैव गान्धार्याश्च यशस्विनी ।
भर्तुः सलोकतां कुन्ती गमिष्यति वधूस्तव ॥ ०१८ ॥

युधिष्ठिरस्य जननी स हि धर्मः सनातनः ।
वयमेतत्प्रपश्यामो नृपते दिव्यचक्षुषा ॥ ०१९ ॥

प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरम् ।
सञ्जयस्त्वदनुध्यानात्पूतः स्वर्गमवाप्स्यति ॥ ०२० ॥

एतच्छ्रुत्वा कौरवेन्द्रो महात्मा ; सहैव पत्न्या प्रीतिमान्प्रत्यगृह्णात् ।
विद्वान्वाक्यं नारदस्य प्रशस्य ; चक्रे पूजां चातुलां नारदाय ॥ ०२१ ॥

तथा सर्वे नारदं विप्रसंघाः ; संपूजयामासुरतीव राजन् ।
राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै ; पुनः पुनः समहृष्टास्तदानीम् ॥ ०२२ ॥

---

# शतयूपप्रश्नः

## अध्याय ०२७

वैशंपायन उवाच ॥

नारदस्य तु तद्वाक्यं प्रशशंसुर्द्विजोत्तमाः ।
शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत् ॥ ००१ ॥

अहो भगवता श्रद्धा कुरुराजस्य वर्धिता ।
सर्वस्य च जनस्यास्य मम चैव महाद्युते ॥ ००२ ॥

अस्ति काचिद्विवक्षा तु मम तां गदतः शृणु ।
धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित ॥ ००३ ॥

सर्ववृत्तान्ततत्त्वज्ञो भवान्दिव्येन चक्षुषा ।
युक्तः पश्यसि देवर्षे गतीर्वै विविधा नृणाम् ॥ ००४ ॥

उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकताम् ।
न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ॥ ००५ ॥

स्थानमस्य क्षितिपतेः श्रोतुमिच्छाम्यहं विभो ।
त्वत्तः कीदृक्कदा वेति तन्ममाचक्ष्व पृच्छतः ॥ ००६ ॥

इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम् ।
व्याजहार सतां मध्ये दिव्यदर्शी महातपाः ॥ ००७ ॥

यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।
दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपम् ॥ ००८ ॥

तत्रेयं धृतराष्ट्रस्य कथा समभवन्नृप ।
तपसो दुश्चरस्यास्य यदयं तप्यते नृपः ॥ ००९ ॥

तत्राहमिदमश्रौषं शक्रस्य वदतो नृप ।
वर्षाणि त्रीणि शिष्टानि राज्ञोऽस्य परमायुषः ॥ ०१० ॥

ततः कुबेरभवनं गान्धारीसहितो नृपः ।
विहर्ता धृतराष्ट्रोऽयं राजराजाभिपूजितः ॥ ०११ ॥

कामगेन विमानेन दिव्याभरणभूषितः ।
ऋषिपुत्रो महाभागस्तपसा दग्धकिल्बिषः ॥ ०१२ ॥

सञ्चरिष्यति लोकांश्च देवगन्धर्वरक्षसाम् ।

स्वच्छन्देनेति धर्मात्मा यन्मां त्वं परिपृच्छसि ॥ ०१३ ॥

देवगुह्यमिदं प्रीत्या मया वः कथितं महत् ।
भवन्तो हि श्रुतधनास्तपसा दग्धकिल्बिषाः ॥ ०१४ ॥

इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।
सर्वे सुमनसः प्रीता बभूवुः स च पार्थिवः ॥ ०१५ ॥

एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणः ।
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ॥ ०१६ ॥

---

# पाण्डवशोकः

## अध्याय ०२८

वैशंपायन उवाच ॥

वनं गते कौरवेन्द्रे दुःखशोकसमाहताः ।
बभूवुः पाण्डवा राजन्मातृशोकेन चार्दिताः ॥ ००१ ॥

तथा पौरजनः सर्वः शोचन्नास्ते जनाधिपम् ।
कुर्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति ॥ ००२ ॥

कथं नु राजा वृद्धः स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥ ००३ ॥

सुखार्हः स हि राजर्षिर्न सुखं तन्महावनम् ।

किमवस्थः समासाद्य प्रज्ञाचक्षुर्हतात्मजः ॥ ००४ ॥

सुदुष्करं कृतवती कुन्ती पुत्रानपश्यती ।
राज्यश्रियं परित्यज्य वनवासमरोचयत् ॥ ००५ ॥

विदुरः किमवस्थश्च भ्रातुः शुश्रूषुरात्मवान् ।
स च गावल्गणिर्धीमान्भर्तृपिण्डानुपालकः ॥ ००६ ॥

आकुमारं च पौरास्ते चिन्ताशोकसमाहताः ।
तत्र तत्र कथाश्चक्रुः समासाद्य परस्परम् ॥ ००७ ॥

पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः ।
शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ॥ ००८ ॥

तथैव पितरं वृद्धं हतपुत्रं जनेश्वरम् ।
गान्धारीं च महाभागां विदुरं च महामतिम् ॥ ००९ ॥

नैषां बभूव संप्रीतिस्तान्विचिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययने तथा ॥ ०१० ॥

परं निर्वेदमगमंश्चिन्तयन्तो नराधिपम् ।
तच्च ज्ञातिवधं घोरं संस्मरन्तः पुनः पुनः ॥ ०११ ॥

अभिमन्योश्च बालस्य विनाशं रणमूर्धनि ।
कर्णस्य च महाबाहोः सङ्ग्रामेष्वपलायिनः ॥ ०१२ ॥

तथैव द्रौपदेयानामन्येषां सुहृदामपि ।
वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ ०१३ ॥

हतप्रवीरां पृथिवीं हतरत्नां च भारत ।
सदैव चिन्तयन्तस्ते न निद्रामुपलेभिरे ॥ ०१४ ॥

द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी ।
नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ॥ ०१५ ॥

वैराट्यास्तु सुतं दृष्ट्वा पितरं ते परिक्षितम् ।
धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः ॥ ०१६ ॥

---

# पाण्डवानां धृतराष्ट्राश्रमाभिगमनम्

## अध्याय ०२९

वैशंपायन उवाच ॥

एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः ।
स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ॥ ००१ ॥

ये राजकार्येषु पुरा व्यासक्ता नित्यशोऽभवन् ।
ते राजकार्याणि तदा नाकार्षुः सर्वतः पुरे ॥ ००२ ॥

आविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन ।
संभाष्यमाणा अपि ते न किञ्चित्प्रत्यपूजयन् ॥ ००३ ॥

ते स्म वीरा दुराधर्षा गाम्भीर्ये सागरोपमाः ।
शोकोपहतविज्ञाना नष्टसञ्ज्ञा इवाभवन् ॥ ००४ ॥

अनुस्मरन्तो जननीं ततस्ते कुरुनन्दनाः ।
कथं नु वृद्धमिथुनं वहत्यद्य पृथा कृशा ॥ ००५ ॥

कथं च स महीपालो हतपुत्रो निराश्रयः ।
पत्न्या सह वसत्येको वने श्वापदसेविते ॥ ००६ ॥

सा च देवी महाभागा गान्धारी हतबान्धवा ।
पतिमन्धं कथं वृद्धमन्वेति विजने वने ॥ ००७ ॥

एवं तेषां कथयतामौत्सुक्यमभवत्तदा ।
गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ॥ ००८ ॥

सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत् ।
अहो मे भवतो दृष्टं हृदयं गमनं प्रति ॥ ००९ ॥

न हि त्वा गौरवेणाहमशकं वक्तुमात्मना ।
गमनं प्रति राजेन्द्र तदिदं समुपस्थितम् ॥ ०१० ॥

दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्तयन्तीं तपस्विनीम् ।
जटिलां तापसीं वृद्धां कुशकाशपरिक्षताम् ॥ ०११ ॥

प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीम् ।
कदा नु जननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् ॥ ०१२ ॥

अनित्याः खलु मर्त्यानां गतयो भरतर्षभ ।
कुन्ती राजसुता यत्र वसत्यसुखिनी वने ॥ ०१३ ॥

सहदेववचः श्रुत्वा द्रौपदी योषितां वरा ।
उवाच देवी राजानमभिपूज्याभिनन्द्य च ॥ ०१४ ॥

कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा ।
जीवन्त्या ह्यद्य नः प्रीतिर्भविष्यति नराधिप ॥ ०१५ ॥

एषा तेऽस्तु मतिर्नित्यं धर्मे ते रमतां मनः ।
योऽद्य त्वमस्मान्राजेन्द्र श्रेयसा योजयिष्यसि ॥ ०१६ ॥

अग्रपादस्थितं चेमं विद्धि राजन्वधूजनम् ।
काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्याः श्वशुरस्य च ॥ ०१७ ॥

इत्युक्तः स नृपो देव्या पाञ्चाल्या भरतर्षभ ।
सेनाध्यक्षान्समानाय्य सर्वानिदमथाब्रवीत् ॥ ०१८ ॥

निर्यातयत मे सेनां प्रभूतरथकुञ्जराम् ।
द्रक्ष्यामि वनसंस्थं च धृतराष्ट्रं महीपतिम् ॥ ०१९ ॥

स्त्र्यध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे ।
सज्जीक्रियन्तां सर्वाणि शिबिकाश्च सहस्रशः ॥ ०२० ॥

शकटापणवेशाश्च कोशशिल्पिन एव च ।
निर्यान्तु कोशपालाश्च कुरुक्षेत्राश्रमं प्रति ॥ ०२१ ॥

यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम् ।
अनावृतः सुविहितः स च यातु सुरक्षितः ॥ ०२२ ॥

सूदाः पौरोगवाश्चैव सर्वं चैव महानसम् ।
विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम ॥ ०२३ ॥

प्रयाणं घुष्यतां चैव श्वोभूत इति मा चिरम् ।
क्रियन्तां पथि चाप्यद्य वेश्मानि विविधानि च ॥ ०२४ ॥

एवमाज्ञाप्य राजा स भ्रातृभिः सह पाण्डवः ।
श्वोभूते निर्ययौ राजा सस्त्रीबालपुरस्कृतः ॥ ०२५ ॥

स बहिर्दिवसानेवं जनौघं परिपालयन् ।

न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति ॥ ०२६ ॥

---

# अध्याय ०३०

वैशंपायन उवाच ॥

आज्ञापयामास ततः सेनां भरतसत्तमः ।
अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः ॥ ००१ ॥

योगो योग इति प्रीत्या ततः शब्दो महानभूत् ।
क्रोशतां सादिनां तत्र युज्यतां युज्यतामिति ॥ ००२ ॥

केचिद्यानैर्नरा जग्मुः केचिदश्वैर्मनोजवैः ।
रथैश्च नगराकारैः प्रदीप्तज्वलनोपमैः ॥ ००३ ॥

गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप ।
पदातिनस्तथैवान्ये नखरप्रासयोधिनः ॥ ००४ ॥

पौरजानपदाश्चैव यानैर्बहुविधैस्तथा ।
अन्वयुः कुरुराजानं धृतराष्ट्रदिदृक्षया ॥ ००५ ॥

स चापि राजवचनादाचार्यो गौतमः कृपः ।
सेनामादाय सेनानी प्रययावाश्रमं प्रति ॥ ००६ ॥

ततो द्विजैर्वृतः श्रीमान्कुरुराजो युधिष्ठिरः ।
संस्तूयमानो बहुभिः सूतमागधबन्दिभिः ॥ ००७ ॥

पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।

रथानीकेन महता निर्ययौ कुरुनन्दनः ॥ ००८ ॥

गजैश्चाचलसङ्काशैर्भीमकर्मा वृकोदरः ।
सज्जयन्त्रायुधोपेतैः प्रययौ मारुतात्मजः ॥ ००९ ॥

माद्रीपुत्रावपि तथा हयारोहैः सुसंवृतौ ।
जग्मतुः प्रीतिजननौ संनद्धकवचध्वजौ ॥ ०१० ॥

अर्जुनश्च महातेजा रथेनादित्यवर्चसा ।
वशी श्वेतैर्हयैर्दिव्यैर्युक्तेनान्वगमन्नृपम् ॥ ०११ ॥

द्रौपदीप्रमुखाश्चापि स्त्रीसंघाः शिबिकागताः ।
स्त्र्यध्यक्षयुक्ताः प्रययुर्विसृजन्तोऽमितं वसु ॥ ०१२ ॥

समृद्धनरनागाश्वं वेणुवीणानिनादितम् ।
शुशुभे पाण्डवं सैन्यं तत्तदा भरतर्षभ ॥ ०१३ ॥

नदीतीरेषु रम्येषु सरत्सु च विशां पते ।
वासान्कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ॥ ०१४ ॥

युयुत्सुश्च महातेजा धौम्यश्चैव पुरोहितः ।
युधिष्ठिरस्य वचनात्पुरगुप्तिं प्रचक्रतुः ॥ ०१५ ॥

ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत् ।
क्रमेणोत्तीर्य यमुनां नदीं परमपावनीम् ॥ ०१६ ॥

स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः ।
शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव ह ॥ ०१७ ॥

ततः प्रमुदितः सर्वो जनस्तद्वनमञ्जसा ।
विवेश सुमहानादैरापूर्य भरतर्षभ ॥ ०१८ ॥

# अध्याय ०३१

वैशंपायन उवाच ॥

ततस्ते पाण्डवा दूरादवतीर्य पदातयः ।
अभिजग्मुर्नरपतेराश्रमं विनयानताः ॥ ००१ ॥

स च पौरजनः सर्वो ये च राष्ट्रनिवासिनः ।
स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ॥ ००२ ॥

आश्रमं ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः ।
शून्यं मृगगणाकीर्णं कदलीवनशोभितम् ॥ ००३ ॥

ततस्तत्र समाजग्मुस्तापसा विविधव्रताः ।
पाण्डवानागतान्द्रष्टुं कौतूहलसमन्विताः ॥ ००४ ॥

तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत् ।
पिता ज्येष्ठो गतोऽस्माकमिति बाष्पपरिप्लुतः ॥ ००५ ॥

तमूचुस्ते ततो वाक्यं यमुनामवगाहितुम् ।
पुष्पाणामुदकुम्भस्य चार्थे गत इति प्रभो ॥ ००६ ॥

तैराख्यातेन मार्गेण ततस्ते प्रययुस्तदा ।
ददृशुश्चाविदूरे तान्सर्वानथ पदातयः ॥ ००७ ॥

ततस्ते सत्वरा जग्मुः पितुर्दर्शनकाङ्क्षिणः ।

सहदेवस्तु वेगेन प्राधावद्येन सा पृथा ॥ ००८ ॥

सस्वनं प्ररुदन्धीमान्मातुः पादावुपस्पृशन् ।
सा च बाष्पाविलमुखी प्रददर्श प्रियं सुतम् ॥ ००९ ॥

बाहुभ्यां संपरिष्वज्य समुन्नाम्य च पुत्रकम् ।
गान्धार्याः कथयामास सहदेवमुपस्थितम् ॥ ०१० ॥

अनन्तरं च राजानं भीमसेनमथार्जुनम् ।
नकुलं च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ॥ ०११ ॥

सा ह्यग्रेऽगच्छत तयोर्दंपत्योर्हतपुत्रयोः ।
कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन्भुवि ॥ ०१२ ॥

तान्राजा स्वरयोगेन स्पर्शेन च महामनाः ।
प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः ॥ ०१३ ॥

ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम् ।
उपतस्थुर्महात्मानो मातरं च यथाविधि ॥ ०१४ ॥

सर्वेषां तोयकलशाञ्जगृहुस्ते स्वयं तदा ।
पाण्डवा लब्धसञ्ज्ञास्ते मात्रा चाश्वासिताः पुनः ॥ ०१५ ॥

ततो नार्यो नृसिंहानां स च योधजनस्तदा ।
पौरजानपदाश्चैव ददृशुस्तं नराधिपम् ॥ ०१६ ॥

निवेदयामास तदा जनं तं नामगोत्रतः ।
युधिष्ठिरो नरपतिः स चैनान्प्रत्यपूजयत् ॥ ०१७ ॥

स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः ।
राजात्मानं गृहगतं पुरेव गजसाह्वये ॥ ०१८ ॥

अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिवः ।
गान्धार्या सहितो धीमान्कुन्त्या च प्रत्यनन्दत ॥ ०१९ ॥

ततश्चाश्रममागच्छत्सिद्धचारणसेवितम् ।
दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव ॥ ०२० ॥

---

# पाण्डववर्णनम्

## अध्याय ०३२

वैशंपायन उवाच ॥

स तैः सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ ।
राजा रुचिरपद्माक्षैरासां चक्रे तदाश्रमे ॥ ००१ ॥

तापसैश्च महाभागैर्नानादेशसमागतैः ।
द्रष्टुं कुरुपतेः पुत्रान्पाण्डवान्पृथुवक्षसः ॥ ००२ ॥

तेऽब्रुवञ्ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः ।
भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी ॥ ००३ ॥

तानाचख्यौ तदा सूतः सर्वान्नामाभिनामतः ।
सञ्जयो द्रौपदीं चैव सर्वाश्चान्याः कुरुस्त्रियः ॥ ००४ ॥

य एष जाम्बूनदशुद्धगौर ;तनुर्महासिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्र ;स्ताम्रायतास्यः कुरुराज एषः ॥ ००५ ॥

अयं पुनर्मत्तगजेन्द्रगामी ; प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसः पृथुदीर्घबाहु ;र्वृकोदरः पश्यत पश्यतैनम् ॥ ००६ ॥

यस्त्वेष पार्श्वेऽस्य महाधनुष्मा ;ञ्श्यामो युवा वारणयूथपाभः ।
सिंहोन्नतांसो गजखेलगामी ; पद्मायताक्षोऽर्जुन एष वीरः ॥ ००७ ॥

कुन्तीसमीपे पुरुषोत्तमौ तु ; यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके सकले समोऽस्ति ; ययोर्न रूपे न बले न शीले ॥ ००८ ॥

इयं पुनः पद्मदलायताक्षी ; मध्यं वयः किञ्चिदिव स्पृशन्ती ।
नीलोत्पलाभा पुरदेवतेव ; कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥ ००९ ॥

अस्यास्तु पार्श्वे कनकोत्तमाभा ; यैषा प्रभा मूर्तिमतीव गौरी ।
मध्ये स्थितैषा भगिनी द्विजाग्र्या ; चक्रायुधस्याप्रतिमस्य तस्य ॥ ०१० ॥

इयं स्वसा राजचमूपतेस्तु ; प्रवृद्धनीलोत्पलदामवर्णा ।
पस्पर्ध कृष्णेन नृपः सदा यो ; वृकोदरस्यैष परिग्रहोऽग्र्यः ॥ ०११ ॥

इयं च राज्ञो मगधाधिपस्य ; सुता जरासंध इति श्रुतस्य ।
यवीयसो माद्रवतीसुतस्य ; भार्या मता चम्पकदामगौरी ॥ ०१२ ॥

इन्दीवरश्यामतनुः स्थिता तु ; यैषापरासन्नमहीतले च ।
भार्या मता माद्रवतीसुतस्य ; ज्येष्ठस्य सेयं कमलायताक्षी ॥ ०१३ ॥

इयं तु निष्टप्तसुवर्णगौरी ; राज्ञो विराटस्य सुता सपुत्रा ।
भार्याभिमन्योर्निहतो रणे यो ; द्रोणादिभिस्तैर्विरथो रथस्थैः ॥ ०१४ ॥

एतास्तु सीमन्तशिरोरुहा याः ; शुक्लोत्तरीया नरराजपत्न्यः ।
राज्ञोऽस्य वृद्धस्य परंशताख्याः ; स्नुषा विवीरा हतपुत्रनाथाः ॥ ०१५ ॥

एता यथामुख्यमुदाहृता वो ; ब्राह्मण्यभावादृजुबुद्धिसत्त्वाः ।
सर्वा भवद्भिः परिपृच्छ्यमाना ; नरेन्द्रपत्न्यः सुविशुद्धसत्त्वाः ॥ ०१६ ॥

एवं स राजा कुरुवृद्धवर्यः ; समागतस्तैर्नरदेवपुत्रैः ।
पप्रच्छ सर्वान्कुशलं तदानीं ; गतेषु सर्वेष्वथ तापसेषु ॥ ०१७ ॥

योधेषु चाप्याश्रममण्डलं तं ; मुक्त्वा निविष्टेषु विमुच्य पत्रम् ।
स्त्रीवृद्धबाले च सुसंनिविष्टे ; यथार्हतः कुशलं पर्यपृच्छत् ॥ ०१८ ॥

---

# विदुरसायुज्यम्

## अध्याय ०३३

धृतराष्ट्र उवाच ॥

युधिष्ठिर महाबाहो कच्चित्तात कुशल्यसि ।
सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा ॥ ००१ ॥

ये च त्वामुपजीवन्ति कच्चित्तेऽपि निरामयाः ।
सचिवा भृत्यवर्गाश्च गुरवश्चैव ते विभो ॥ ००२ ॥

कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेविताम् ।
कच्चिद्दायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते ॥ ००३ ॥

अरिमध्यस्थमित्रेषु वर्तसे चानुरूपतः ।
ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि ॥ ००४ ॥

कच्चित्ते परितुष्यन्ति शीलेन भरतर्षभ ।
शत्रवो गुरवः पौरा भृत्या वा स्वजनोऽपि वा ॥ ००५ ॥

कच्चिद्यजसि राजेन्द्र श्रद्धावान्पितृदेवताः ।
अतिथींश्चान्नपानेन कच्चिदर्चसि भारत ॥ ००६ ॥

कच्चिच्च विषये विप्राः स्वकर्मनिरतास्तव ।
क्षत्रिया वैश्यवर्गा वा शूद्रा वापि कुटुम्बिनः ॥ ००७ ॥

कच्चित्स्त्रीबालवृद्धं ते न शोचति न याचते ।
जामयः पूजिताः कच्चित्तव गेहे नरर्षभ ॥ ००८ ॥

कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य महीपतिम् ।
यथोचितं महाराज यशसा नावसीदति ॥ ००९ ॥

वैशंपायन उवाच ॥

इत्येवंवादिनं तं स न्यायवित्प्रत्यभाषत ।
कुशलप्रश्नसंयुक्तं कुशलो वाक्यकर्मणि ॥ ०१० ॥

कच्चित्ते वर्धते राजंस्तपो मन्दश्रमस्य ते ।
अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा ॥ ०११ ॥

अप्यस्याः सफलो राजन्वनवासो भविष्यति ॥ ०११ ॥

इयं च माता ज्येष्ठा मे वीतवाताध्वकर्शिता ।
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति ॥ ०१२ ॥

हतान्पुत्रान्महावीर्यान्क्षत्रधर्मपरायणान् ।
नापध्यायति वा कच्चिदस्मान्पापकृतः सदा ॥ ०१३ ॥

क्व चासौ विदुरो राजन्नैनं पश्यामहे वयम् ।
सञ्जयः कुशली चायं कच्चिन्नु तपसि स्थितः ॥ ०१४ ॥

इत्युक्तः प्रत्युवाचेदं धृतराष्ट्रो जनाधिपम् ।
कुशली विदुरः पुत्र तपो घोरं समास्थितः ॥ ०१५ ॥

वायुभक्षो निराहारः कृशो धमनिसंततः ।
कदाचिद्दृश्यते विप्रैः शून्येऽस्मिन्कानने क्वचित् ॥ ०१६ ॥

इत्येवं वदतस्तस्य जटी वीटामुखः कृशः ।
दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ॥ ०१७ ॥

दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः ।
निवर्तमानः सहसा जनं दृष्ट्वाश्रमं प्रति ॥ ०१८ ॥

तमन्वधावन्नृपतिरेक एव युधिष्ठिरः ।
प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित्क्वचित् ॥ ०१९ ॥

भो भो विदुर राजाहं दयितस्ते युधिष्ठिरः ।
इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत ॥ ०२० ॥

ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः ।
विदुरो वृक्षमाश्रित्य कञ्चित्तत्र वनान्तरे ॥ ०२१ ॥

तं राजा क्षीणभूयिष्ठमाकृतीमात्रसूचितम् ।
अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः ॥ ०२२ ॥

युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाग्रतः स्थितः ।
विदुरस्याश्रवे राजा स च प्रत्याह सञ्ज्ञया ॥ ०२३ ॥

ततः सोऽनिमिषो भूत्वा राजानं समुदैक्षत ।

संयोज्य विदुरस्तस्मिन्दृष्टिं दृष्ट्या समाहितः ॥ ०२४ ॥

विवेश विदुरो धीमान्गात्रैर्गात्राणि चैव ह ।
प्राणान्प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च ॥ ०२५ ॥

स योगबलमास्थाय विवेश नृपतेस्तनुम् ।
विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव ॥ ०२६ ॥

विदुरस्य शरीरं तत्तथैव स्तब्धलोचनम् ।
वृक्षाश्रितं तदा राजा ददर्श गतचेतनम् ॥ ०२७ ॥

बलवन्तं तथात्मानं मेने बहुगुणं तदा ।
धर्मराजो महातेजास्तच्च सस्मार पाण्डवः ॥ ०२८ ॥

पौराणमात्मनः सर्वं विद्यावान्स विशां पते ।
योगधर्मं महातेजा व्यासेन कथितं यथा ॥ ०२९ ॥

धर्मराजस्तु तत्रैनं सञ्चस्कारयिषुस्तदा ।
दग्धुकामोऽभवद्विद्वानथ वै वागभाषत ॥ ०३० ॥

भो भो राजन्न दग्धव्यमेतद्विदुरसञ्ज्ञकम् ।
कलेवरमिहैतत्ते धर्म एष सनातनः ॥ ०३१ ॥

लोकाः संतानका नाम भविष्यन्त्यस्य पार्थिव ।
यतिधर्ममवाप्तोऽसौ नैव शोच्यः परंतप ॥ ०३२ ॥

इत्युक्तो धर्मराजः स विनिवृत्य ततः पुनः ।
राज्ञो वैचित्रवीर्यस्य तत्सर्वं प्रत्यवेदयत् ॥ ०३३ ॥

ततः स राजा द्युतिमान्स च सर्वो जनस्तदा ।
भीमसेनादयश्चैव परं विस्मयमागताः ॥ ०३४ ॥

तच्छ्रुत्वा प्रीतिमान्राजा भूत्वा धर्मजमब्रवीत् ।
आपो मूलं फलं चैव ममेदं प्रतिगृह्यताम् ॥ ०३५ ॥

यदन्नो हि नरो राजंस्तदन्नोऽस्यातिथिः स्मृतः ।
इत्युक्तः स तथेत्येव प्राह धर्मात्मजो नृपम् ॥ ०३६ ॥

फलं मूलं च बुभुजे राज्ञा दत्तं सहानुजः ॥ ०३६ ॥

ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः ।
तां रात्रिं न्यवसन्सर्वे फलमूलजलाशनाः ॥ ०३७ ॥

---

# व्यासागमनम्

## अध्याय ०३४

वैशंपायन उवाच ॥

एवं सा रजनी तेषामाश्रमे पुण्यकर्मणाम् ।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय भारत ॥ ००१ ॥

तत्र तत्र कथाश्चासंस्तेषां धर्मार्थलक्षणाः ।
विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ॥ ००२ ॥

पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा ।
उत्सृज्य सुमहार्हाणि शयनानि नराधिप ॥ ००३ ॥

यदाहारोऽभवद्राजा धृतराष्ट्रो महामनाः ।
तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ॥ ००४ ॥

व्यतीतायां तु शर्वर्यां कृतपूर्वाह्णिकक्रियः ।
भ्रातृभिः सह कौन्तेयो ददर्शाश्रममण्डलम् ॥ ००५ ॥

सान्तःपुरपरीवारः सभृत्यः सपुरोहितः ।
यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ॥ ००६ ॥

ददर्श तत्र वेदीश्च संप्रज्वलितपावकाः ।
कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ॥ ००७ ॥

वानेयपुष्पनिकरैराज्यधूमोद्गमैरपि ।
ब्राह्मेण वपुषा युक्ता युक्ता मुनिगणैश्च ताः ॥ ००८ ॥

मृगयूथैरनुद्विग्नैस्तत्र तत्र समाश्रितैः ।
अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ॥ ००९ ॥

केकाभिर्नीलकण्ठानां दात्यूहानां च कूजितैः ।
कोकिलानां च कुहरैः शुभैः श्रुतिमनोहरैः ॥ ०१० ॥

प्राधीतद्विजघोषैश्च क्वचित्क्वचिदलङ्कृतम् ।
फलमूलसमुद्वाहैर्महद्भिश्चोपशोभितम् ॥ ०११ ॥

ततः स राजा प्रददौ तापसार्थमुपाहृतान् ।
कलशान्काञ्चनान्राजंस्तथैवौदुम्बरानपि ॥ ०१२ ॥

अजिनानि प्रवेणीश्च स्रुक्स्रुवं च महीपतिः ।
कमण्डलूंस्तथा स्थालीः पिठराणि च भारत ॥ ०१३ ॥

भाजनानि च लौहानि पात्रीश्च विविधा नृप ।

यद्यदिच्छति यावच्च यदन्यदपि काङ्क्षितम्  ॥ ०१४  ॥

एवं स राजा धर्मात्मा परीत्याश्रममण्डलम् ।
वसु विश्राण्य तत्सर्वं पुनरायान्महीपतिः  ॥ ०१५  ॥

कृताह्निकं च राजानं धृतराष्ट्रं मनीषिणम् ।
ददर्शासीनमव्यग्रं गान्धारीसहितं तदा  ॥ ०१६  ॥

मातरं चाविदूरस्थां शिष्यवत्प्रणतां स्थिताम् ।
कुन्तीं ददर्श धर्मात्मा सततं धर्मचारिणीम्  ॥ ०१७  ॥

स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः ।
निषीदेत्यभ्यनुज्ञातो बृस्यामुपविवेश ह  ॥ ०१८  ॥

भीमसेनादयश्चैव पाण्डवाः कौरवर्षभम् ।
अभिवाद्योपसङ्गृह्य निषेदुः पार्थिवाज्ञया  ॥ ०१९  ॥

स तैः परिवृतो राजा शुशुभेऽतीव कौरवः ।
बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः  ॥ ०२०  ॥

तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः ।
शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः  ॥ ०२१  ॥

व्यासश्च भगवान्विप्रो देवर्षिगणपूजितः ।
वृतः शिष्यैर्महातेजा दर्शयामास तं नृपम्  ॥ ०२२  ॥

ततः स राजा कौरव्यः कुन्तीपुत्रश्च वीर्यवान् ।
भीमसेनादयश्चैव समुत्थायाभ्यपूजयन्  ॥ ०२३  ॥

समागतस्ततो व्यासः शतयूपादिभिर्वृतः ।
धृतराष्ट्रं महीपालमास्यतामित्यभाषत  ॥ ०२४  ॥

नवं तु विष्टरं कौश्यं कृष्णाजिनकुशोत्तरम् ।
प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितम् ॥ ०२५ ॥

ते च सर्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः ।
द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः ॥ ०२६ ॥

---

# व्यासवाक्यम्

## अध्याय ०३५

वैशंपायन उवाच ॥

तथा समुपविष्टेषु पाण्डवेषु महात्मसु ।
व्यासः सत्यवतीपुत्रः प्रोवाचामन्त्र्य पार्थिवम् ॥ ००१ ॥

धृतराष्ट्र महाबाहो कच्चित्ते वर्धते तपः ।
कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप ॥ ००२ ॥

कच्चिद्धृदि न ते शोको राजन्पुत्रविनाशजः ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवानघ ॥ ००३ ॥

कच्चिद्बुद्धिं दृढां कृत्वा चरस्यारण्यकं विधिम् ।
कच्चिद्वधूश्च गान्धारी न शोकेनाभिभूयते ॥ ००४ ॥

महाप्रज्ञा बुद्धिमती देवी धर्मार्थदर्शिनी ।
आगमापायतत्त्वज्ञा कच्चिदेषा न शोचति ॥ ००५ ॥

कच्चित्कुन्ती च राजंस्त्वां शुश्रूषुरनहङ्कृता ।
या परित्यज्य राज्यं स्वं गुरुशुश्रूषणे रता ॥ ००६ ॥

कच्चिद्धर्मसुतो राजा त्वया प्रीत्याभिनन्दितः ।
भीमार्जुनयमाश्चैव कच्चिदेतेऽपि सान्त्विताः ॥ ००७ ॥

कच्चिन्नन्दसि दृष्ट्वैतान्कच्चित्ते निर्मलं मनः ।
कच्चिद्विशुद्धभावोऽसि जातज्ञानो नराधिप ॥ ००८ ॥

एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत ।
निर्वैरता महाराज सत्यमद्रोह एव च ॥ ००९ ॥

कच्चित्ते नानुतापोऽस्ति वनवासेन भारत ।
स्वदते वन्यमन्नं वा मुनिवासांसि वा विभो ॥ ०१० ॥

विदितं चापि मे राजन्विदुरस्य महात्मनः ।
गमनं विधिना येन धर्मस्य सुमहात्मनः ॥ ०११ ॥

माण्डव्यशापाद्धि स वै धर्मो विदुरतां गतः ।
महाबुद्धिर्महायोगी महात्मा सुमहामनाः ॥ ०१२ ॥

बृहस्पतिर्वा देवेषु शुक्रो वाप्यसुरेषु यः ।
न तथा बुद्धिसंपन्नो यथा स पुरुषर्षभः ॥ ०१३ ॥

तपोबलव्ययं कृत्वा सुमहच्चिरसंभृतम् ।
माण्डव्येनर्षिणा धर्मो ह्यभिभूतः सनातनः ॥ ०१४ ॥

नियोगाद्ब्रह्मणः पूर्वं मया स्वेन बलेन च ।
वैचित्रवीर्यके क्षेत्रे जातः स सुमहामतिः ॥ ०१५ ॥

भ्राता तव महाराज देवदेवः सनातनः ।
धारणाच्छ्रेयसो ध्यानाद्यं धर्मं कवयो विदुः  ॥ ०१६  ॥

सत्येन संवर्धयति दमेन नियमेन च ।
अहिंसया च दानेन तपसा च सनातनः  ॥ ०१७  ॥

येन योगबलाज्जातः कुरुराजो युधिष्ठिरः ।
धर्म इत्येष नृपते प्राज्ञेनामितबुद्धिना  ॥ ०१८  ॥

यथा ह्यग्निर्यथा वायुर्यथापः पृथिवी यथा ।
यथाकाशं तथा धर्म इह चामुत्र च स्थितः  ॥ ०१९  ॥

सर्वगश्चैव कौरव्य सर्वं व्याप्य चराचरम् ।
दृश्यते देवदेवः स सिद्धैर्निर्दग्धकिल्बिषैः  ॥ ०२०  ॥

यो हि धर्मः स विदुरो विदुरो यः स पाण्डवः ।
स एष राजन्वश्यस्ते पाण्डवः प्रेष्यवत्स्थितः  ॥ ०२१  ॥

प्रविष्टः स स्वमात्मानं भ्राता ते बुद्धिसत्तमः ।
दिष्ट्या महात्मा कौन्तेयं महायोगबलान्वितः  ॥ ०२२  ॥

त्वां चापि श्रेयसा योक्ष्ये नचिराद्भरतर्षभ ।
संशयच्छेदनार्थं हि प्राप्तं मां विद्धि पुत्रक  ॥ ०२३  ॥

न कृतं यत्पुरा कैश्चित्कर्म लोके महर्षिभिः ।
आश्चर्यभूतं तपसः फलं संदर्शयामि वः  ॥ ०२४  ॥

किमिच्छसि महीपाल मत्तः प्राप्तुममानुषम् ।
द्रष्टुं स्प्रष्टुमथ श्रोतुं वद कर्तास्मि तत्तथा  ॥ ०२५  ॥

# पुत्रदर्शनपर्व

## अध्याय ०३६

जनमेजय उवाच ॥

वनवासं गते विप्र धृतराष्ट्रे महीपतौ ।
सभार्ये नृपशार्दूले वध्वा कुन्त्या समन्विते ॥ ००१ ॥

विदुरे चापि संसिद्धे धर्मराजं व्यपाश्रिते ।
वसत्सु पाण्डुपुत्रेषु सर्वेष्वाश्रममण्डले ॥ ००२ ॥

यत्तदाश्चर्यमिति वै करिष्यामीत्युवाच ह ।
व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ॥ ००३ ॥

वनवासे च कौरव्यः कियन्तं कालमच्युतः ।
युधिष्ठिरो नरपतिर्न्यवसत्सजनो द्विज ॥ ००४ ॥

किमाहाराश्च ते तत्र ससैन्या न्यवसन्प्रभो ।
सान्तःपुरा महात्मान इति तद्ब्रूहि मेऽनघ ॥ ००५ ॥

वैशंपायन उवाच ॥

तेऽनुज्ञातास्तदा राजन्कुरुराजेन पाण्डवाः ।
विविधान्यन्नपानानि विश्राम्यानुभवन्ति ते ॥ ००६ ॥

मासमेकं विजह्रुस्ते ससैन्यान्तःपुरा वने ।
अथ तत्रागमद्व्यासो यथोक्तं ते मयानघ ॥ ००७ ॥

तथा तु तेषां सर्वेषां कथाभिर्नृपसंनिधौ ।
व्यासमन्वासतां राजन्नाजग्मुर्मुनयोऽपरे ॥ ००८ ॥

नारदः पर्वतश्चैव देवलश्च महातपाः ।
विश्वावसुस्तुम्बुरुश्च चित्रसेनश्च भारत ॥ ००९ ॥

तेषामपि यथान्यायं पूजां चक्रे महामनाः ।
धृतराष्ट्राभ्यनुज्ञातः कुरुराजो युधिष्ठिरः ॥ ०१० ॥

निषेदुस्ते ततः सर्वे पूजां प्राप्य युधिष्ठिरात् ।
आसनेष्वथ पुण्येषु बर्हिष्केषु वरेषु च ॥ ०११ ॥

तेषु तत्रोपविष्टेषु स तु राजा महामतिः ।
पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वहः ॥ ०१२ ॥

गान्धारी चैव कुन्ती च द्रौपदी सात्वती तथा ।
स्त्रियश्चान्यास्तथान्याभिः सहोपविविशुस्ततः ॥ ०१३ ॥

तेषां तत्र कथा दिव्या धर्मिष्ठाश्चाभवन्नृप ।
ऋषीणां च पुराणानां देवासुरविमिश्रिताः ॥ ०१४ ॥

ततः कथान्ते व्यासस्तं प्रज्ञाचक्षुषमीश्वरम् ।
प्रोवाच वदतां श्रेष्ठः पुनरेव स तद्वचः ॥ ०१५ ॥

प्रीयमाणो महातेजाः सर्ववेदविदां वरः ॥ ०१५ ॥

विदितं मम राजेन्द्र यत्ते हृदि विवक्षितम् ।
दह्यमानस्य शोकेन तव पुत्रकृतेन वै ॥ ०१६ ॥

गान्धार्याश्चैव यद्दुःखं हृदि तिष्ठति पार्थिव ।

कुन्त्याश्च यन्महाराज द्रौपद्याश्च हृदि स्थितम्  ॥ ०१७  ॥

यच्च धारयते तीव्रं दुःखं पुत्रविनाशजम् ।
सुभद्रा कृष्णभगिनी तच्चापि विदितं मम  ॥ ०१८  ॥

श्रुत्वा समागममिमं सर्वेषां वस्ततो नृप ।
संशयच्छेदनायाहं प्राप्तः कौरवनन्दन  ॥ ०१९  ॥

इमे च देवगन्धर्वाः सर्वे चैव महर्षयः ।
पश्यन्तु तपसो वीर्यमद्य मे चिरसंभृतम्  ॥ ०२०  ॥

तदुच्यतां महाबाहो कं कामं प्रदिशामि ते ।
प्रवणोऽस्मि वरं दातुं पश्य मे तपसो बलम्  ॥ ०२१  ॥

एवमुक्तः स राजेन्द्रो व्यासेनामितबुद्धिना ।
मुहूर्तमिव सञ्चिन्त्य वचनायोपचक्रमे  ॥ ०२२  ॥

धन्योऽस्म्यनुगृहीतोऽस्मि सफलं जीवितं च मे ।
यन्मे समागमोऽद्येह भवद्भिः सह साधुभिः  ॥ ०२३  ॥

अद्य चाप्यवगच्छामि गतिमिष्टामिहात्मनः ।
भवद्भिर्ब्रह्मकल्पैर्यत्समेतोऽहं तपोधनाः  ॥ ०२४  ॥

दर्शनादेव भवतां पूतोऽहं नात्र संशयः ।
विद्यते न भयं चापि परलोकान्ममानघाः  ॥ ०२५  ॥

किं तु तस्य सुदुर्बुद्धेर्मन्दस्यापनयैर्भृशम् ।
दूयते मे मनो नित्यं स्मरतः पुत्रगृद्धिनः  ॥ ०२६  ॥

अपापाः पाण्डवा येन निकृताः पापबुद्धिना ।
घातिता पृथिवी चेयं सहसा सनरद्विपा  ॥ ०२७  ॥

राजानश्च महात्मानो नानाजनपदेश्वराः ।
आगम्य मम पुत्रार्थे सर्वे मृत्युवशं गताः ॥ ०२८ ॥

ये ते पुत्रांश्च दाराश्च प्राणांश्च मनसः प्रियान् ।
परित्यज्य गताः शूराः प्रेतराजनिवेशनम् ॥ ०२९ ॥

का नु तेषां गतिर्ब्रह्मन्मित्रार्थे ये हता मृधे ।
तथैव पुत्रपौत्राणां मम ये निहता युधि ॥ ०३० ॥

दूयते मे मनोऽभीक्ष्णं घातयित्वा महाबलम् ।
भीष्मं शांतनवं वृद्धं द्रोणं च द्विजसत्तमम् ॥ ०३१ ॥

मम पुत्रेण मूढेन पापेन सुहृदद्विषा ।
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता ॥ ०३२ ॥

एतत्सर्वमनुस्मृत्य दह्यमानो दिवानिशम् ।
न शान्तिमधिगच्छामि दुःखशोकसमाहतः ॥ ०३३ ॥

इति मे चिन्तयानस्य पितः शर्म न विद्यते ॥ ०३३ ॥

---

# अध्याय ०३७

वैशंपायन उवाच ॥

तच्छ्रुत्वा विविधं तस्य राजर्षेः परिदेवितम् ।
पुनर्नवीकृतः शोको गान्धार्या जनमेजय ॥ ००१ ॥

कुन्त्या द्रुपदपुत्र्याश्च सुभद्रायास्तथैव च ।
तासां च वरनारीणां वधूनां कौरवस्य ह ॥ ००२ ॥

पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत् ।
श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ॥ ००३ ॥

षोडशेमानि वर्षाणि गतानि मुनिपुङ्गव ।
अस्य राज्ञो हतान्पुत्राञ्शोचतो न शमो विभो ॥ ००४ ॥

पुत्रशोकसमाविष्टो निःश्वसन्ह्येष भूमिपः ।
न शेते वसतीः सर्वा धृतराष्ट्रो महामुने ॥ ००५ ॥

लोकानन्यान्समर्थोऽसि स्रष्टुं सर्वांस्तपोबलात् ।
किमु लोकान्तरगतान्राज्ञो दर्शयितुं सुतान् ॥ ००६ ॥

इयं च द्रौपदी कृष्णा हतज्ञातिसुता भृशम् ।
शोचत्यतीव साध्वी ते स्नुषाणां दयिता स्नुषा ॥ ००७ ॥

तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी ।
सौभद्रवधसंतप्ता भृशं शोचति भामिनी ॥ ००८ ॥

इयं च भूरिश्रवसो भार्या परमदुःखिता ।
भर्तृव्यसनशोकार्ता न शेते वसतीः प्रभो ॥ ००९ ॥

यस्यास्तु श्वशुरो धीमान्बाह्लीकः स कुरूद्वहः ।
निहतः सोमदत्तश्च पित्रा सह महारणे ॥ ०१० ॥

श्रीमच्चास्य महाबुद्धेः सङ्ग्रामेष्वपलायिनः ।
पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे ॥ ०११ ॥

तस्य भार्याशतमिदं पुत्रशोकसमाहतम् ।

पुनः पुनर्वर्धयानं शोकं राज्ञो ममैव च ॥ ०१२ ॥

तेनारम्भेण महता मामुपास्ते महामुने ॥ ०१२ ॥

ये च शूरा महात्मानः श्वशुरा मे महारथाः ।
सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो ॥ ०१३ ॥

तव प्रसादाद्भगवन्विशोकोऽयं महीपतिः ।
कुर्यात्कालमहं चैव कुन्ती चेयं वधूस्तव ॥ ०१४ ॥

इत्युक्तवत्यां गान्धार्यां कुन्ती व्रतकृशानना ।
प्रच्छन्नजातं पुत्रं तं सस्मारादित्यसंभवम् ॥ ०१५ ॥

तामृषिर्वरदो व्यासो दूरश्रवणदर्शनः ।
अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः ॥ ०१६ ॥

तामुवाच ततो व्यासो यत्ते कार्यं विवक्षितम् ।
तद्ब्रूहि त्वं महाप्राज्ञे यत्ते मनसि वर्तते ॥ ०१७ ॥

ततः कुन्ती श्वशुरयोः प्रणम्य शिरसा तदा ।
उवाच वाक्यं सव्रीडं विवृण्वाना पुरातनम् ॥ ०१८ ॥

---

# कर्णजन्मकथनम्

## अध्याय ०३८

कुन्त्युवाच ॥

भगवञ्श्वशुरो मेऽसि दैवतस्यापि दैवतम् ।
स मे देवातिदेवस्त्वं श्रृणु सत्यां गिरं मम  ॥ ००१  ॥

तपस्वी कोपनो विप्रो दुर्वासा नाम मे पितुः ।
भिक्षामुपागतो भोक्तुं तमहं पर्यतोषयम्  ॥ ००२  ॥

शौचेन त्वागसस्त्यागैः शुद्धेन मनसा तथा ।
कोपस्थानेष्वपि महत्स्वकुप्यं न कदाचन  ॥ ००३  ॥

स मे वरमदात्प्रीतः कृतमित्यहमब्रुवम् ।
अवश्यं ते ग्रहीतव्यमिति मां सोऽब्रवीद्वचः  ॥ ००४  ॥

ततः शापभयाद्विप्रमवोचं पुनरेव तम् ।
एवमस्त्विति च प्राह पुनरेव स मां द्विजः  ॥ ००५  ॥

धर्मस्य जननी भद्रे भवित्री त्वं वरानने ।
वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि  ॥ ००६  ॥

इत्युक्त्वान्तर्हितो विप्रस्ततोऽहं विस्मिताभवम् ।
न च सर्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति  ॥ ००७  ॥

अथ हर्म्यतलस्थाहं रविमुद्यन्तमीक्षती ।
संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम्  ॥ ००८  ॥

स्थिताहं बालभावेन तत्र दोषमबुध्यती  ॥ ००८  ॥

अथ देवः सहस्रांशुर्मत्समीपगतोऽभवत् ।
द्विधा कृत्वात्मनो देहं भूमौ च गगनेऽपि च  ॥ ००९  ॥

ततापं लोकानेकेन द्वितीयेनागमच्च माम्  ॥ ००९  ॥

स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह ।
गम्यतामिति तं चाहं प्रणम्य शिरसावदम् ॥ ०१० ॥

स मामुवाच तिग्मांशुर्वृथाह्वानं न ते क्षमम् ।
धक्ष्यामि त्वां च विप्रं च येन दत्तो वरस्तव ॥ ०११ ॥

तमहं रक्षती विप्रं शापादनपराधिनम् ।
पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रुवम् ॥ ०१२ ॥

ततो मां तेजसाविश्य मोहयित्वा च भानुमान् ।
उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवम् ॥ ०१३ ॥

ततोऽहमन्तर्भवने पितुर्वृत्तान्तरक्षिणी ।
गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् ॥ ०१४ ॥

नूनं तस्यैव देवस्य प्रसादात्पुनरेव तु ।
कन्याहमभवं विप्र यथा प्राह स मामृषिः ॥ ०१५ ॥

स मया मूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः ।
तन्मां दहति विप्रर्षे यथा सुविदितं तव ॥ ०१६ ॥

यदि पापमपापं वा तदेतद्विवृतं मया ।
तन्मे भयं त्वं भगवन्व्यपनेतुमिहार्हसि ॥ ०१७ ॥

यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ ।
तं चायं लभतां काममद्यैव मुनिसत्तम ॥ ०१८ ॥

इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदां वरः ।
साधु सर्वमिदं तथ्यमेवमेव यथात्थ माम् ॥ ०१९ ॥

अपराधश्च ते नास्ति कन्याभावं गता ह्यसि ।
देवाश्चैश्वर्यवन्तो वै शरीराण्याविशन्ति वै ॥ ०२० ॥

सन्ति देवनिकायाश्च सङ्कल्पाज्जनयन्ति ये ।
वाचा दृष्ट्या तथा स्पर्शात्संघर्षेणेति पञ्चधा ॥ ०२१ ॥

मनुष्यधर्मो दैवेन धर्मेण न हि युज्यते ।
इति कुन्ति व्यजानीहि व्येतु ते मानसो ज्वरः ॥ ०२२ ॥

सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि ।
सर्वं बलवतां धर्मः सर्वं बलवतां स्वकम् ॥ ०२३ ॥

---

## अध्याय ०३९

व्यास उवाच ॥

भद्रे द्रक्ष्यसि गान्धारि पुत्रान्भ्रातॄन्सखींस्तथा ।
वधूश्च पतिभिः सार्धं निशि सुप्तोत्थिता इव ॥ ००१ ॥

कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी ।
द्रौपदी पञ्च पुत्रांश्च पितॄन्भ्रातॄंस्तथैव च ॥ ००२ ॥

पूर्वमेवैष हृदये व्यवसायोऽभवन्मम ।
यथास्मि चोदितो राज्ञा भवत्या पृथयैव च ॥ ००३ ॥

न ते शोच्या महात्मानः सर्व एव नरर्षभाः ।
क्षत्रधर्मपराः सन्तस्तथा हि निधनं गताः ॥ ००४ ॥

भवितव्यमवश्यं तत्सुरकार्यमनिन्दिते ।
अवतेरुस्ततः सर्वे देवभागैर्महीतलम्  ॥ ००५  ॥

गन्धर्वाप्सरसश्चैव पिशाचा गुह्यराक्षसाः ।
तथा पुण्यजनाश्चैव सिद्धा देवर्षयोऽपि च  ॥ ००६  ॥

देवाश्च दानवाश्चैव तथा ब्रह्मर्षयोऽमलाः ।
त एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे  ॥ ००७  ॥

गन्धर्वराजो यो धीमान्धृतराष्ट्र इति श्रुतः ।
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव  ॥ ००८  ॥

पाण्डुं मरुद्गणं विद्धि विशिष्टतममच्युतम् ।
धर्मस्यांशोऽभवत्क्षत्ता राजा चायं युधिष्ठिरः  ॥ ००९  ॥

कलिं दुर्योधनं विद्धि शकुनिं द्वापरं तथा ।
दुःशासनादीन्विद्धि त्वं राक्षसाञ्शुभदर्शने  ॥ ०१०  ॥

मरुद्गणाद्भीमसेनं बलवन्तमरिंदमम् ।
विद्धि च त्वं नरमृषिमिमं पार्थं धनञ्जयम्  ॥ ०११  ॥

नारायणं हृषीकेशमश्विनौ यमजावुभौ  ॥ ०११  ॥

द्विधा कृत्वात्मनो देहमादित्यं तपतां वरम् ।
लोकांश्च तापयानं वै विद्धि कर्णं च शोभने  ॥ ०१२  ॥

यश्च वैरार्थमुद्भूतः संघर्षजननस्तथा  ॥ ०१२  ॥

यश्च पाण्डवदायादो हतः षड्भिर्महारथैः ।
स सोम इह सौभद्रो योगादेवाभवद्द्विधा  ॥ ०१३  ॥

द्रौपद्या सह संभूतं धृष्टद्युम्नं च पावकात् ।
अग्नेर्भागं शुभं विद्धि राक्षसं तु शिखण्डिनम् ॥ ०१४ ॥

द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम् ।
भीष्मं च विद्धि गाङ्गेयं वसुं मानुषतां गतम् ॥ ०१५ ॥

एवमेते महाप्राज्ञे देवा मानुष्यमेत्य हि ।
ततः पुनर्गताः स्वर्गं कृते कर्मणि शोभने ॥ ०१६ ॥

यच्च वो हृदि सर्वेषां दुःखमेनच्चिरं स्थितम् ।
तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥ ०१७ ॥

सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।
तत्र द्रक्ष्यथ तान्सर्वान्ये हतास्मिन्रणाजिरे ॥ ०१८ ॥

वैशंपायन उवाच ॥

इति व्यासस्य वचनं श्रुत्वा सर्वो जनस्तदा ।
महता सिंहनादेन गङ्गामभिमुखो ययौ ॥ ०१९ ॥

धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः ।
सहितो मुनिशार्दूलैर्गन्धर्वैश्च समागतैः ॥ ०२० ॥

ततो गङ्गां समासाद्य क्रमेण स जनार्णवः ।
निवासमकरोत्सर्वो यथाप्रीति यथासुखम् ॥ ०२१ ॥

राजा च पाण्डवैः सार्धमिष्टे देशे सहानुगः ।
निवासमकरोद्धीमान्सस्त्रीवृद्धपुरःसरः ॥ ०२२ ॥

जगाम तदहश्चापि तेषां वर्षशतं यथा ।

निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् ॥ ०२३ ॥

अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः ।
ततः कृताभिषेकास्ते नैशं कर्म समाचरन् ॥ ०२४ ॥

---

# दुर्योधनादिदर्शनम्

## अध्याय ०४०

वैशंपायन उवाच ॥

ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः ।
व्यासमभ्यगमन्सर्वे ये तत्रासन्समागताः ॥ ००१ ॥

धृतराष्ट्रस्तु धर्मात्मा पाण्डवैः सहितस्तदा ।
शुचिरेकमनाः सार्धमृषिभिस्तैरुपाविशत् ॥ ००२ ॥

गान्धार्या सह नार्यस्तु सहिताः समुपाविशन् ।
पौरजानपदश्चापि जनः सर्वो यथावयः ॥ ००३ ॥

ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवगाह्याजुहावाथ सर्वा.ण्ल्लोकान्महामुनिः ॥ ००४ ॥

पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ।
राजानश्च महाभागा नानादेशनिवासिनः ॥ ००५ ॥

ततः सुतुमुलः शब्दो जलान्तर्जनमेजय ।

प्रादुरासीद्यथा पूर्वं कुरुपाण्डवसेनयोः ॥ ००६ ॥

ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः ।
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः ॥ ००७ ॥

विराटद्रुपदौ चोभौ सपुत्रौ सहसैनिकौ ।
द्रौपदेयाश्च सौभद्रो राक्षसश्च घटोत्कचः ॥ ००८ ॥

कर्णदुर्योधनौ चोभौ शकुनिश्च महारथः ।
दुःशासनादयश्चैव धार्तराष्ट्रा महारथाः ॥ ००९ ॥

जारासंधिर्भगदत्तो जलसंधश्च पार्थिवः ।
भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ॥ ०१० ॥

लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्य चात्मजाः ।
शिखण्डिपुत्राः सर्वे च धृष्टकेतुश्च सानुजः ॥ ०११ ॥

अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः ।
बाह्लीकः सोमदत्तश्च चेकितानश्च पार्थिवः ॥ ०१२ ॥

एते चान्ये च बहवो बहुत्वाद्ये न कीर्तिताः ।
सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः ॥ ०१३ ॥

यस्य वीरस्य यो वेषो यो ध्वजो यच्च वाहनम् ।
तेन तेन व्यदृश्यन्त समुपेता नराधिपाः ॥ ०१४ ॥

दिव्याम्बरधराः सर्वे सर्वे भ्राजिष्णुकुण्डलाः ।
निर्वैरा निरहङ्कारा विगतक्रोधमन्यवः ॥ ०१५ ॥

गन्धर्वैरुपगीयन्तः स्तूयमानाश्च बन्दिभिः ।
दिव्यमाल्याम्बरधरा वृताश्चाप्सरसां गणैः ॥ ०१६ ॥

धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप ।
मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात् ॥ ०१७ ॥

दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी ।
ददर्श पुत्रांस्तान्सर्वान्ये चान्येऽपि रणे हताः ॥ ०१८ ॥

तदद्भुतमचिन्त्यं च सुमहद्रोमहर्षणम् ।
विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः ॥ ०१९ ॥

तदुत्सवमदोदग्रं हृष्टनारीनराकुलम् ।
ददृशे बलमायान्तं चित्रं पटगतं यथा ॥ ०२० ॥

धृतराष्ट्रस्तु तान्सर्वान्पश्यन्दिव्येन चक्षुषा ।
मुमुदे भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः ॥ ०२१ ॥

---

# अध्याय ०४१

वैशंपायन उवाच ॥

ततस्ते भरतश्रेष्ठाः समाजग्मुः परस्परम् ।
विगतक्रोधमात्सर्याः सर्वे विगतकल्मषाः ॥ ००१ ॥

विधिं परममास्थाय ब्रह्मर्षिविहितं शुभम् ।
संप्रीतमनसः सर्वे देवलोक इवामराः ॥ ००२ ॥

पुत्रः पित्रा च मात्रा च भार्या च पतिना सह ।

भ्राता भ्रात्रा सखा चैव सख्या राजन्समागताः ॥ ००३ ॥

पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च ।
संप्रहर्षात्समाजग्मुर्द्रौपदेयांश्च सर्वशः ॥ ००४ ॥

ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः ।
समेत्य पृथिवीपालाः सौहृदेऽवस्थिताभवन् ॥ ००५ ॥

ऋषिप्रसादात्तेऽन्ये च क्षत्रिया नष्टमन्यवः ।
असौहृदं परित्यज्य सौहृदे पर्यवस्थिताः ॥ ००६ ॥

एवं समागताः सर्वे गुरुभिर्बान्धवैस्तथा ।
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च मानवाः ॥ ००७ ॥

तां रात्रिमेकां कृत्स्नां ते विहृत्य प्रीतमानसाः ।
मेनिरे परितोषेण नृपाः स्वर्गसदो यथा ॥ ००८ ॥

नात्र शोको भयं त्रासो नारतिर्नायशोऽभवत् ।
परस्परं समागम्य योधानां भरतर्षभ ॥ ००९ ॥

समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः सुतैः ।
मुदं परमिकां प्राप्य नार्यो दुःखमथात्यजन् ॥ ०१० ॥

एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतम् ॥ ०११ ॥

ततो विसर्जयामास लोकांस्तान्मुनिपुङ्गवः ।
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् ॥ ०१२ ॥

अवगाह्य महात्मानः पुण्यां त्रिपथगां नदीम् ।
सरथाः सध्वजाश्चैव स्वानि स्थानानि भेजिरे ॥ ०१३ ॥

देवलोकं ययुः केचित्केचिद्ब्रह्मसदस्तथा ।
केचिच्च वारुणं लोकं केचित्कौबेरमाप्नुवन् ॥ ०१४ ॥

तथा वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपाः ।
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान्कुरून् ॥ ०१५ ॥

विचित्रगतयः सर्वे या अवाप्यामरैः सह ।
आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः ॥ ०१६ ॥

गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः ।
धर्मशीलो महातेजाः कुरूणां हितकृत्सदा ॥ ०१७ ॥

ततः प्रोवाच ताः सर्वाः क्षत्रिया निहतेश्वराः ॥ ०१७ ॥

या याः पतिकृता.ण्ल्लोकानिच्छन्ति परमस्त्रियः ।
ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः ॥ ०१८ ॥

ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः ।
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥ ०१९ ॥

विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह ।
समाजग्मुस्तदा साध्व्यः सर्वा एव विशां पते ॥ ०२० ॥

एवं क्रमेण सर्वास्ताः शीलवत्यः कुलस्त्रियः ।
प्रविश्य तोयं निर्मुक्ता जग्मुर्भर्तृसलोकताम् ॥ ०२१ ॥

दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः ।
दिव्यमाल्याम्बरधरा यथासां पतयस्तथा ॥ ०२२ ॥

ताः शीलसत्त्वसंपन्ना वितमस्का गतक्लमाः ।

सर्वाः सर्वगुणैर्युक्ताः स्वं स्वं स्थानं प्रपेदिरे ॥ ०२३ ॥

यस्य यस्य च यः कामस्तस्मिन्कालेऽभवत्तदा ।
तं तं विसृष्टवान्व्यासो वरदो धर्मवत्सलः ॥ ०२४ ॥

तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः ।
जहृषुर्मुदिताश्चासन्नन्यदेहगता अपि ॥ ०२५ ॥

प्रियैः समागमं तेषां य इमं शृणुयान्नरः ।
प्रियाणि लभते नित्यमिह च प्रेत्य चैव ह ॥ ०२६ ॥

इष्टबान्धवसंयोगमनायासमनामयम् ।
य इमं श्रावयेद्विद्वान्संसिद्धिं प्राप्नुयात्पराम् ॥ ०२७ ॥

स्वाध्याययुक्ताः पुरुषाः क्रियायुक्ताश्च भारत ।
अध्यात्मयोगयुक्ताश्च धृतिमन्तश्च मानवाः ॥ ०२८ ॥

श्रुत्वा पर्व त्विदं नित्यमवाप्स्यन्ति परां गतिम् ॥ ०२८ ॥

---

# वैशंपायनवाक्यम्

## अध्याय ०४२

सूत उवाच ॥

एतच्छ्रुत्वा नृपो विद्वान्हृष्टोऽभूज्जनमेजयः ।
पितामहानां सर्वेषां गमनागमनं तदा ॥ ००१ ॥

अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति ।
कथं नु त्यक्तदेहानां पुनस्तद्रूपदर्शनम् ॥ ००२ ॥

इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान् ।
प्रोवाच वदतां श्रेष्ठस्तं नृपं जनमेजयम् ॥ ००३ ॥

अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ।
कर्मजानि शरीराणि तथैवाकृतयो नृप ॥ ००४ ॥

महाभूतानि नित्यानि भूताधिपतिसंश्रयात् ।
तेषां च नित्यसंवासो न विनाशो वियुज्यताम् ॥ ००५ ॥

अनाशाय कृतं कर्म तस्य चेष्टः फलागमः ।
आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते ॥ ००६ ॥

अविनाशी तथा नित्यं क्षेत्रज्ञ इति निश्चयः ।
भूतानामात्मभावो यो ध्रुवोऽसौ संविजानताम् ॥ ००७ ॥

यावन्न क्षीयते कर्म तावदस्य स्वरूपता ।
सङ्क्षीणकर्मा पुरुषो रूपान्यत्वं नियच्छति ॥ ००८ ॥

नानाभावास्तथैकत्वं शरीरं प्राप्य संहताः ।
भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ॥ ००९ ॥

अश्वमेधे श्रुतिश्चेयमश्वसञ्ज्ञपनं प्रति ।
लोकान्तरगता नित्यं प्राणा नित्या हि वाजिनः ॥ ०१० ॥

अहं हितं वदाम्येतत्प्रियं चेत्तव पार्थिव ।
देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे ॥ ०११ ॥

सुकृतो यत्र ते यज्ञस्तत्र देवा हितास्तव ।
यदा समन्विता देवाः पशूनां गमनेश्वराः ॥ ०१२ ॥

गतिमन्तश्च तेनेष्ट्वा नान्ये नित्या भवन्ति ते ॥ ०१२ ॥

नित्येऽस्मिन्पञ्चके वर्गे नित्ये चात्मनि यो नरः ।
अस्य नानासमायोगं यः पश्यति वृथामतिः ॥ ०१३ ॥

वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः ॥ ०१३ ॥

वियोगे दोषदर्शी यः संयोगमिह वर्जयेत् ।
असङ्गे सङ्गमो नास्ति दुःखं भुवि वियोगजम् ॥ ०१४ ॥

परापरज्ञस्तु नरो नाभिमानादुदीरितः ।
अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते ॥ ०१५ ॥

अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता ॥ ०१६ ॥

येन येन शरीरेण करोत्ययमनीश्वरः ।
तेन तेन शरीरेण तदवश्यमुपाश्नुते ॥ ०१७ ॥

मानसं मनसाप्नोति शारीरं च शरीरवान् ॥ ०१७ ॥

# जनमेजयस्य परिक्शिद् दर्शनम्

## अध्याय ०४३

वैशंपायन उवाच ॥

अदृष्ट्वा तु नृपः पुत्रान्दर्शनं प्रतिलब्धवान् ।
ऋषिप्रसादात्पुत्राणां स्वरूपाणां कुरूद्वह ॥ ००१ ॥

स राजा राजधर्मांश्च ब्रह्मोपनिषदं तथा ।
अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च ॥ ००२ ॥

विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् ।
धृतराष्ट्रः समासाद्य व्यासं चापि तपस्विनम् ॥ ००३ ॥

जनमेजय उवाच ॥

ममापि वरदो व्यासो दर्शयेत्पितरं यदि ।
तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव ते ॥ ००४ ॥

प्रियं मे स्यात्कृतार्थश्च स्यामहं कृतनिश्चयः ।
प्रसादादृषिपुत्रस्य मम कामः समृध्यताम् ॥ ००५ ॥

सूत उवाच ॥

इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान् ।
प्रसादमकरोद्धीमानानयच्च परिक्षितम् ॥ ००६ ॥

ततस्तद्रूपवयसमागतं नृपतिं दिवः ।
श्रीमन्तं पितरं राजा ददर्श जनमेजयः ॥ ००७ ॥

शमीकं च महात्मानं पुत्रं तं चास्य शृङ्गिणम् ।
अमात्या ये बभूवुश्च राज्ञस्तांश्च ददर्श ह ॥ ००८ ॥

ततः सोऽवभृथे राजा मुदितो जनमेजयः ।
पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ॥ ००९ ॥

स्नात्वा च भरतश्रेष्ठः सोऽऽस्तीकमिदमब्रवीत् ।
यायावरकुलोत्पन्नं जरत्कारुसुतं तदा ॥ ०१० ॥

आस्तीक विविधाश्चर्यो यज्ञोऽयमिति मे मतिः ।
यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ॥ ०११ ॥

आस्तीक उवाच ॥

ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः ।
यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ ॥ ०१२ ॥

श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन ।
सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः ॥ ०१३ ॥

कथञ्चित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव ।
ऋषयः पूजिताः सर्वे गतिं दृष्ट्वा महात्मनः ॥ ०१४ ॥

प्राप्तः सुविपुलो धर्मः श्रुत्वा पापविनाशनम् ।
विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् ॥ ०१५ ॥

ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये ।
यान्दृष्ट्वा हीयते पापं तेभ्यः कार्या नमस्क्रियाः ॥ ०१६ ॥

सूत उवाच ॥

एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
पूजयामास तमृषिमनुमान्य पुनः पुनः ॥ ०१७ ॥

पप्रच्छ तमृषिं चापि वैशंपायनमच्युतम् ।
कथावशेषं धर्मज्ञो वनवासस्य सत्तम ॥ ०१८ ॥

---

# युधिष्ठिरनिवर्तनम्

## अध्याय ०४४

जनमेजय उवाच ॥

दृष्ट्वा पुत्रांस्तथा पौत्रान्सानुबन्धाञ्जनाधिपः ।
धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ॥ ००१ ॥

वैशंपायन उवाच ॥

तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं पुनः ।
वीतशोकः स राजर्षिः पुनराश्रममागमत् ॥ ००२ ॥

इतरस्तु जनः सर्वस्ते चैव परमर्षयः ।
प्रतिजग्मुर्यथाकामं धृतराष्ट्राभ्यनुज्ञया ॥ ००३ ॥

पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः ।
अनुजग्मुर्महात्मानं सदारं तं महीपतिम् ॥ ००४ ॥

तमाश्रमगतं धीमान्ब्रह्मर्षिर्लोकपूजितः ।

मुनिः सत्यवतीपुत्रो धृतराष्ट्रमभाषत ॥ ००५ ॥

धृतराष्ट्र महाबाहो शृणु कौरवनन्दन ।
श्रुतं ते ज्ञानवृद्धानामृषीणां पुण्यकर्मणाम् ॥ ००६ ॥

ऋद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनाम् ।
धर्मज्ञानां पुराणानां वदतां विविधाः कथाः ॥ ००७ ॥

मा स्म शोके मनः कार्षीर्दिष्टेन व्यथते बुधः ।
श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ॥ ००८ ॥

गतास्ते क्षत्रधर्मेण शस्त्रपूतां गतिं शुभाम् ।
यथा दृष्टास्त्वया पुत्रा यथाकामविहारिणः ॥ ००९ ॥

युधिष्ठिरस्त्वयं धीमान्भवन्तमनुरुध्यते ।
सहितो भ्रातृभिः सर्वैः सदारः ससुहृज्जनः ॥ ०१० ॥

विसर्जयैनं यात्वेष स्वराज्यमनुशासताम् ।
मासः समधिको ह्येषामतीतो वसतां वने ॥ ०११ ॥

एतद्धि नित्यं यत्नेन पदं रक्ष्यं परंतप ।
बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम नराधिप ॥ ०१२ ॥

इत्युक्तः कौरवो राजा व्यासेनामितबुद्धिना ।
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ॥ ०१३ ॥

अजातशत्रो भद्रं ते शृणु मे भ्रातृभिः सह ।
त्वत्प्रसादान्महीपाल शोको नास्मान्प्रबाधते ॥ ०१४ ॥

रमे चाहं त्वया पुत्र पुरेव गजसाह्वये ।
नाथेनानुगतो विद्वन्प्रियेषु परिवर्तिना ॥ ०१५ ॥

प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे विपुला त्वयि ।
न मे मन्युर्महाबाहो गम्यतां पुत्र मा चिरम् ॥ ०१६ ॥

भवन्तं चेह संप्रेक्ष्य तपो मे परिहीयते ।
तपोयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः ॥ ०१७ ॥

मातरौ ते तथैवेमे शीर्णपर्णकृताशने ।
मम तुल्यव्रते पुत्र नचिरं वर्तयिष्यतः ॥ ०१८ ॥

दुर्योधनप्रभृतयो दृष्टा लोकान्तरं गताः ।
व्यासस्य तपसो वीर्याद्भवतश्च समागमात् ॥ ०१९ ॥

प्रयोजनं चिरं वृत्तं जीवितस्य च मेऽनघ ।
उग्रं तपः समास्थास्ये त्वमनुज्ञातुमर्हसि ॥ ०२० ॥

त्वय्यद्य पिण्डः कीर्तिश्च कुलं चेदं प्रतिष्ठितम् ।
श्वो वाद्य वा महाबाहो गम्यतां पुत्र मा चिरम् ॥ ०२१ ॥

राजनीतिः सुबहुशः श्रुता ते भरतर्षभ ।
संदेष्टव्यं न पश्यामि कृतमेतावता विभो ॥ ०२२ ॥

इत्युक्तवचनं तात नृपो राजानमब्रवीत् ।
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ॥ ०२३ ॥

कामं गच्छन्तु मे सर्वे भ्रातरोऽनुचरास्तथा ।
भवन्तमहमन्विष्ये मातरौ च यतव्रते ॥ ०२४ ॥

तमुवाचाथ गान्धारी मैवं पुत्र श्ृणुष्व मे ।
त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ॥ ०२५ ॥

गम्यतां पुत्र पर्याप्तमेतावत्पूजिता वयम् ।
राजा यदाह तत्कार्यं त्वया पुत्र पितुर्वचः ॥ ०२६ ॥

इत्युक्तः स तु गान्धार्या कुन्तीमिदमुवाच ह ।
स्नेहबाष्पाकुले नेत्रे प्रमृज्य रुदतीं वचः ॥ ०२७ ॥

विसर्जयति मां राजा गान्धारी च यशस्विनी ।
भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः ॥ ०२८ ॥

न चोत्सहे तपोविघ्नं कर्तुं ते धर्मचारिणि ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ ०२९ ॥

ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा ।
तपस्येवानुरक्तं मे मनः सर्वात्मना तथा ॥ ०३० ॥

शून्येयं च मही सर्वा न मे प्रीतिकरी शुभे ।
बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ॥ ०३१ ॥

पाञ्चालाः सुभृशं क्षीणाः कन्यामात्रावशेषिताः ।
न तेषां कुलकर्तारं कञ्चित्पश्याम्यहं शुभे ॥ ०३२ ॥

सर्वे हि भस्मसान्नीता द्रोणेनैकेन संयुगे ।
अवशेषास्तु निहता द्रोणपुत्रेण वै निशि ॥ ०३३ ॥

चेदयश्चैव मत्स्याश्च दृष्टपूर्वास्तथैव नः ।
केवलं वृष्णिचक्रं तु वासुदेवपरिग्रहात् ॥ ०३४ ॥

यं दृष्ट्वा स्थातुमिच्छामि धर्मार्थं नान्यहेतुकम् ॥ ०३४ ॥

शिवेन पश्य नः सर्वान्दुर्लभं दर्शनं तव ।
भविष्यत्यम्ब राजा हि तीव्रमारप्स्यते तपः ॥ ०३५ ॥

एतच्छ्रुत्वा महाबाहुः सहदेवो युधां पतिः ।
युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः ॥ ०३६ ॥

नोत्सहेऽहं परित्यक्तुं मातरं पार्थिवर्षभ ।
प्रतियातु भवान्क्षिप्रं तपस्तप्स्याम्यहं वने ॥ ०३७ ॥

इहैव शोषयिष्यामि तपसाहं कलेवरम् ।
पादशुश्रूषणे युक्तो राज्ञो मात्रोस्तथानयोः ॥ ०३८ ॥

तमुवाच ततः कुन्ती परिष्वज्य महाभुजम् ।
गम्यतां पुत्र मैव त्वं वोचः कुरु वचो मम ॥ ०३९ ॥

आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ।
उपरोधो भवेदेवमस्माकं तपसः कृते ॥ ०४० ॥

त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात् ।
तस्मात्पुत्रक गच्छ त्वं शिष्टमल्पं हि नः प्रभो ॥ ०४१ ॥

एवं संस्तम्भितं वाक्यैः कुन्त्या बहुविधैर्मनः ।
सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः ॥ ०४२ ॥

ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः ।
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् ॥ ०४३ ॥

राजन्प्रतिगमिष्यामः शिवेन प्रतिनन्दिताः ।
अनुज्ञातास्त्वया राजन्गमिष्यामो विकल्मषाः ॥ ०४४ ॥

एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना ।
अनुजज्ञे जयाशीर्भिरभिनन्द्य युधिष्ठिरम् ॥ ०४५ ॥

भीमं च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः ।
स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्यवान्  ॥ ०४६  ॥

अर्जुनं च समाश्लिष्य यमौ च पुरुषर्षभौ ।
अनुजज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च  ॥ ०४७  ॥

गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवन्दनाः ।
जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम्  ॥ ०४८  ॥

चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे  ॥ ०४८  ॥

पुनः पुनर्निरीक्षन्तः प्रजग्मुस्ते प्रदक्षिणम् ।
तथैव द्रौपदी साध्वी सर्वाः कौरवयोषितः  ॥ ०४९  ॥

न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ।
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः  ॥ ०५०  ॥

संदिष्टाश्चेतिकर्तव्यं प्रययुर्भर्तृभिः सह  ॥ ०५०  ॥

ततः प्रजज्ञे निनदः सूतानां युज्यतामिति ।
उष्ट्राणां क्रोशतां चैव हयानां हेषतामपि  ॥ ०५१  ॥

ततो युधिष्ठिरो राजा सदारः सहसैनिकः ।
नगरं हास्तिनपुरं पुनरायात्सबान्धवः  ॥ ०५२  ॥

# नारदागमनपर्व

## धृतराष्ट्रादीनां दावाग्नौ दाहः

## अध्याय ०४५

वैशंपायन उवाच ॥

द्विवर्षोपनिवृत्तेषु पाण्डवेषु यदृच्छया ।
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ ००१ ॥

तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः ।
आसीनं परिविश्वस्तं प्रोवाच वदतां वरः ॥ ००२ ॥

चिरस्य खलु पश्यामि भगवन्तमुपस्थितम् ।
कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितम् ॥ ००३ ॥

के देशाः परिदृष्टास्ते किं च कार्यं करोमि ते ।
तद्ब्रूहि द्विजमुख्य त्वमस्माकं च प्रियोऽतिथिः ॥ ००४ ॥

नारद उवाच ॥

चिरदृष्टोऽसि मे राजन्नागतोऽस्मि तपोवनात् ।
परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ॥ ००५ ॥

युधिष्ठिर उवाच ॥

वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः ।
धृतराष्ट्रं महात्मानमास्थितं परमं तपः ॥ ००६ ॥

अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः ।

गान्धारी च पृथा चैव सूतपुत्रश्च सञ्जयः ॥ ००७ ॥

कथं च वर्तते चाद्य पिता मम स पार्थिवः ।
श्रोतुमिच्छामि भगवन्यदि दृष्टस्त्वया नृपः ॥ ००८ ॥

नारद उवाच ॥

स्थिरीभूय महाराज शृणु सर्वं यथातथम् ।
यथा श्रुतं च दृष्टं च मया तस्मिंस्तपोवने ॥ ००९ ॥

वनवासनिवृत्तेषु भवत्सु कुरुनन्दन ।
कुरुक्षेत्रात्पिता तुभ्यं गङ्गाद्वारं ययौ नृप ॥ ०१० ॥

गान्धार्या सहितो धीमान्वध्वा कुन्त्या समन्वितः ।
सञ्जयेन च सूतेन साग्निहोत्रः सयाजकः ॥ ०११ ॥

आतस्थे स तपस्तीव्रं पिता तव तपोधनः ।
वीटां मुखे समाधाय वायुभक्षोऽभवन्मुनिः ॥ ०१२ ॥

वने स मुनिभिः सर्वैः पूज्यमानो महातपाः ।
त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः ॥ ०१३ ॥

गान्धारी तु जलाहारा कुन्ती मासोपवासिनी ।
सञ्जयः षष्ठभक्तेन वर्तयामास भारत ॥ ०१४ ॥

अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत्प्रभो ।
दृश्यतोऽदृश्यतश्चैव वने तस्मिन्नृपस्य ह ॥ ०१५ ॥

अनिकेतोऽथ राजा स बभूव वनगोचरः ।
ते चापि सहिते देव्यौ सञ्जयश्च तमन्वयुः ॥ ०१६ ॥

सञ्जयो नृपतेर्नेता समेषु विषमेषु च ।
गान्धार्यास्तु पृथा राजंश्चक्षुरासीदनिन्दिता ॥ ०१७ ॥

ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः ।
गङ्गायामाप्लुतो धीमानाश्रमाभिमुखोऽभवत् ॥ ०१८ ॥

अथ वायुः समुद्धूतो दावाग्निरभवन्महान् ।
ददाह तद्वनं सर्वं परिगृह्य समन्ततः ॥ ०१९ ॥

दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः ।
वराहाणां च यूथेषु संश्रयत्सु जलाशयान् ॥ ०२० ॥

समाविद्धे वने तस्मिन्प्राप्ते व्यसन उत्तमे ।
निराहारतया राजा मन्दप्राणविचेष्टितः ॥ ०२१ ॥

असमर्थोऽपसरणे सुकृशौ मातरौ च ते ॥ ०२१ ॥

ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह ततः सूतं सञ्जयं पृथिवीपते ॥ ०२२ ॥

गच्छ सञ्जय यत्राग्निर्न त्वां दहति कर्हिचित् ।
वयमत्राग्निना युक्ता गमिष्यामः परां गतिम् ॥ ०२३ ॥

तमुवाच किलोद्विग्नः सञ्जयो वदतां वरः ।
राजन्मृत्युरनिष्टोऽयं भविता ते वृथाग्निना ॥ ०२४ ॥

न चोपायं प्रपश्यामि मोक्षणे जातवेदसः ।
यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति ॥ ०२५ ॥

इत्युक्तः सञ्जयेनेदं पुनराह स पार्थिवः ।
नैष मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् ॥ ०२६ ॥

जलमग्निस्तथा वायुरथ वापि विकर्शनम् ।
तापसानां प्रशस्यन्ते गच्छ सञ्जय माचिरम्  ॥ ०२७  ॥

इत्युक्त्वा सञ्जयं राजा समाधाय मनस्तदा ।
प्राङ्मुखः सह गान्धार्या कुन्त्या चोपाविशत्तदा  ॥ ०२८  ॥

सञ्जयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत् ।
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो  ॥ ०२९  ॥

ऋषिपुत्रो मनीषी स राजा चक्रेऽस्य तद्वचः ।
संनिरुध्येन्द्रियग्राममासीत्काष्ठोपमस्तदा  ॥ ०३०  ॥

गान्धारी च महाभागा जननी च पृथा तव ।
दावाग्निना समायुक्ते स च राजा पिता तव  ॥ ०३१  ॥

सञ्जयस्तु महामात्रस्तस्माद्दावादमुच्यत ।
गङ्गाकूले मया दृष्टस्तापसैः परिवारितः  ॥ ०३२  ॥

स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः ।
प्रययौ सञ्जयः सूतो हिमवन्तं महीधरम्  ॥ ०३३  ॥

एवं स निधनं प्राप्तः कुरुराजो महामनाः ।
गान्धारी च पृथा चैव जनन्यौ ते नराधिप  ॥ ०३४  ॥

यदृच्छयानुव्रजता मया राज्ञः कलेवरम् ।
तयोश्च देव्योरुभयोर्दृष्टानि भरतर्षभ  ॥ ०३५  ॥

ततस्तपोवने तस्मिन्समाजग्मुस्तपोधनाः ।
श्रुत्वा राज्ञस्तथा निष्ठां न त्वशोचन्गतिं च ते  ॥ ०३६  ॥

तत्राश्रौषमहं सर्वमेतत्पुरुषसत्तम ।
यथा च नृपतिर्दग्धो देव्यौ ते चेति पाण्डव ॥ ०३७ ॥

न शोचितव्यं राजेन्द्र स्वन्तः स पृथिवीपतिः ।
प्राप्तवानग्निसंयोगं गान्धारी जननी च ते ॥ ०३८ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा तु सर्वेषां पाण्डवानां महात्मनाम् ।
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ॥ ०३९ ॥

अन्तःपुराणां च तदा महानार्तस्वरोऽभवत् ।
पौराणां च महाराज श्रुत्वा राज्ञस्तदा गतिम् ॥ ०४० ॥

अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः ।
ऊर्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः ॥ ०४१ ॥

भीमसेनपुरोगाश्च भ्रातरः सर्व एव ते ॥ ०४१ ॥

अन्तःपुरेषु च तदा सुमहान्रुदितस्वनः ।
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम् ॥ ०४२ ॥

तं च वृद्धं तथा दग्धं हतपुत्रं नराधिपम् ।
अन्वशोचन्त ते सर्वे गान्धारीं च तपस्विनीम् ॥ ०४३ ॥

तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत ।
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम् ॥ ०४४ ॥

# युधिष्ठिरशोकः

## अध्याय ०४६

युधिष्ठिर उवाच ॥

तथा महात्मनस्तस्य तपस्युग्रे च वर्ततः ।
अनाथस्येव निधनं तिष्ठत्स्वस्मासु बन्धुषु ॥ ००१ ॥

दुर्विज्ञेया हि गतयः पुरुषाणां मता मम ।
यत्र वैचित्रवीर्योऽसौ दग्ध एवं दवाग्निना ॥ ००२ ॥

यस्य पुत्रशतं श्रीमदभवद्बाहुशालिनः ।
नागायुतबलो राजा स दग्धो हि दवाग्निना ॥ ००३ ॥

यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः ।
तं गृध्राः पर्यवीजन्त दावाग्निपरिकालितम् ॥ ००४ ॥

सूतमागधसंघैश्च शयानो यः प्रबोध्यते ।
धरण्यां स नृपः शेते पापस्य मम कर्मभिः ॥ ००५ ॥

न तु शोचामि गान्धारीं हतपुत्रां यशस्विनीम् ।
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥ ००६ ॥

पृथामेव तु शोचामि या पुत्रैश्वर्यमृद्धिमत् ।
उत्सृज्य सुमहद्दीप्तं वनवासमरोचयत् ॥ ००७ ॥

धिग्राज्यमिदमस्माकं धिग्बलं धिक्पराक्रमम् ।
क्षत्रधर्मं च धिग्यस्मान्मृता जीवामहे वयम् ॥ ००८ ॥

सुसूक्ष्मा किल कालस्य गतिर्द्विजवरोत्तम ।

यत्समुत्सृज्य राज्यं सा वनवासमरोचयत् ॥ ००९ ॥

युधिष्ठिरस्य जननी भीमस्य विजयस्य च ।
अनाथवत्कथं दग्धा इति मुह्यामि चिन्तयन् ॥ ०१० ॥

वृथा संतोषितो वह्निः खाण्डवे सव्यसाचिना ।
उपकारमजानन्स कृतघ्न इति मे मतिः ॥ ०११ ॥

यत्रादहत्स भगवान्मातरं सव्यसाचिनः ।
कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः ॥ ०१२ ॥

धिगग्निं धिक्च पार्थस्य विश्रुतां सत्यसंधताम् ॥ ०१२ ॥

इदं कष्टतरं चान्यद्भगवन्प्रतिभाति मे ।
वृथाग्निना समायोगो यदभूत्पृथिवीपतेः ॥ ०१३ ॥

तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह ।
कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमाम् ॥ ०१४ ॥

तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने ।
वृथाग्निना समायुक्तो निष्ठां प्राप्तः पिता मम ॥ ०१५ ॥

मन्ये पृथा वेपमाना कृशा धमनिसंतता ।
हा तात धर्मराजेति समाक्रन्दन्महाभये ॥ ०१६ ॥

भीम पर्याप्नुहि भयादिति चैवाभिवाशती ।
समन्ततः परिक्षिप्ता माता मेऽभूद्दवाग्निना ॥ ०१७ ॥

सहदेवः प्रियस्तस्याः पुत्रेभ्योऽधिक एव तु ।
न चैनां मोक्षयामास वीरो माद्रवतीसुतः ॥ ०१८ ॥

तच्छ्रुत्वा रुरुदुः सर्वे समालिङ्ग्य परस्परम् ।
पाण्डवाः पञ्च दुःखार्ता भूतानीव युगक्षये ॥ ०१९ ॥

तेषां तु पुरुषेन्द्राणां रुदतां रुदितस्वनः ।
प्रासादाभोगसंरुद्धो अन्वरौत्सीत्स रोदसी ॥ ०२० ॥

---

# धृतराष्ट्रश्राद्धकरणम्

## अध्याय ०४७

नारद उवाच ॥

नासौ वृथाग्निना दग्धो यथा तत्र श्रुतं मया ।
वैचित्रवीर्यो नृपतिस्तत्ते वक्ष्यामि भारत ॥ ००१ ॥

वनं प्रविशता तेन वायुभक्षेण धीमता ।
अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् ॥ ००२ ॥

याजकास्तु ततस्तस्य तानग्नीन्निर्जने वने ।
समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम ॥ ००३ ॥

स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत्किल ।
तेन तद्वनमादीप्तमिति मे तापसाब्रुवन् ॥ ००४ ॥

स राजा जाह्नवीकच्छे यथा ते कथितं मया ।
तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ॥ ००५ ॥

एवमावेदयामासुर्मुनयस्ते ममानघ ।
ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ॥ ००६ ॥

एवं स्वेनाग्निना राजा समायुक्तो महीपते ।
मा शोचिथास्त्वं नृपतिं गतः स परमां गतिम् ॥ ००७ ॥

गुरुशुश्रूषया चैव जननी तव पाण्डव ।
प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ॥ ००८ ॥

कर्तुमर्हसि कौरव्य तेषां त्वमुदकक्रियाम् ।
भ्रातृभिः सहितः सर्वैरेतदत्र विधीयताम् ॥ ००९ ॥

वैशंपायन उवाच ॥

ततः स पृथिवीपालः पाण्डवानां धुरंधरः ।
निर्ययौ सह सोदर्यैः सदारो भरतर्षभ ॥ ०१० ॥

पौरजानपदाश्चैव राजभक्तिपुरस्कृताः ।
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥ ०११ ॥

ततोऽवगाह्य सलिलं सर्वे ते कुरुपुङ्गवाः ।
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥ ०१२ ॥

गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रतः ।
शौचं निवर्तयन्तस्ते तत्रोषुर्नगराद्बहिः ॥ ०१३ ॥

प्रेषयामास स नरान्विधिज्ञानाप्तकारिणः ।
गङ्गाद्वारं कुरुश्रेष्ठो यत्र दग्धोऽभवन्नृपः ॥ ०१४ ॥

तत्रैव तेषां कुल्यानि गङ्गाद्वारेऽन्वशात्तदा ।
कर्तव्यानीति पुरुषान्दत्तदेयान्महीपतिः ॥ ०१५ ॥

द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः ।
ददौ श्राद्धानि विधिवद्दक्षिणावन्ति पाण्डवः ॥ ०१६ ॥

धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः ।
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ॥ ०१७ ॥

गान्धार्याश्चैव तेजस्वी पृथायाश्च पृथक्पृथक् ।
सङ्कीर्त्य नामनी राजा ददौ दानमनुत्तमम् ॥ ०१८ ॥

यो यदिच्छति यावच्च तावत्स लभते द्विजः ।
शयनं भोजनं यानं मणिरत्नमथो धनम् ॥ ०१९ ॥

यानमाच्छादनं भोगान्दासीश्च परिचारिकाः ।
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः ॥ ०२० ॥

ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः ।
प्रविवेश पुनर्धीमान्नगरं वारणाह्वयम् ॥ ०२१ ॥

ते चापि राजवचनात्पुरुषा ये गताभवन् ।
सङ्कल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ॥ ०२२ ॥

माल्यैर्गन्धैश्च विविधैः पूजयित्वा यथाविधि ।
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः ॥ ०२३ ॥

समाश्वास्य च राजानं धर्मात्मानं युधिष्ठिरम् ।
नारदोऽप्यगमद्राजन्परमर्षिर्यथेप्सितम् ॥ ०२४ ॥

एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः ।
वनवासे तदा त्रीणि नगरे दश पञ्च च ॥ ०२५ ॥

हतपुत्रस्य सङ्ग्रामे दानानि ददतः सदा ।
ज्ञातिसंबन्धिमित्राणां भ्रातॄणां स्वजनस्य च ॥ ०२६ ॥

युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा ।
धारयामास तद्राज्यं निहतज्ञातिबान्धवः ॥ ०२७ ॥

---

Mahabharata
Encoding : ISCII

http ://bombay.indology.info/mahabharata/statement.html for further details
Converted for devanagari output using xetex-itrans with sdvn mapping on July 23, 2013